


**श्रीमच्छृङ्गेरी जगद्गुरु महासंस्थानम्, शारदापीठम् ॥**

शृङ्गेरी–कडूर्, मैसूर् स्टेट् ।

***Sri Sringeri Jagadguru Mahasamsthanam, Sarada Pitham,***

SRINGERI-KADUR (Mysore State)


श्रीमत्परमहंसपरिव्राजकाचार्यवर्य पदवाक्यप्रमाणपारावारपारीण यमनियमासन
प्राणायाम प्रत्याहार धारणाध्यान समाध्यष्टाङ्ग योगानुष्ठाननिष्ठ तपश्चक्रवर्त्यना-
द्यविच्छिन्न श्रीशङ्कराचार्य गुरुपरंपराप्राप्त षड्दर्शनस्थापनाचार्य व्याख्यान
सिंहासनाधीश्वर सकलनिगमागमसारहृदय सांख्यत्रयप्रतिपादक वैदिक
मार्गप्रवर्तक सर्वतन्त्रस्वतन्त्रादिराजधानी विद्यानगर महाराजधानी
कर्णाटकसिंहासनप्रतिष्ठापनाचार्य श्रीमद्राजाधिराजगुरु भूमण्डला-
चार्य ऋष्यशृङ्गपुरवराधीश्वर तुङ्गभद्रातीरवासि श्रीमद्विद्याशङ्कर
पादपद्माराधक श्रीजगद्गुरु श्री चन्द्रशेखर भारती स्वामि
गुरुकरकमलसञ्जात श्रीजगद्गुरु शृङ्गेरी

## श्रीमदभिनवविद्यातीर्थस्वामिभिः

अनुगृहीतं

# ॥ श्रीमुखम् ॥

तत्त्वचिन्तनपराः समेऽपि भारतीयाः जीवं नित्यमभ्युपगच्छन्ति । स हि अविद्याकामकर्मवशेन नानाशरीराणि भोगायोपादत्ते । सः स्वयं अजायमानोऽपि आविद्यकशरीरसंबन्धात् आत्मानं जातं म्रियमाणं च मनुते । तत्र च अविद्यया तिरोहितस्वस्वरूपः नानाविधानि दुःखा-न्यनुभवन् किंकर्तव्यतामूढः खिद्यति । तं च जीवं उद्दिधीर्षुः भगवान्

प्रवृत्तिनिवृत्तिलक्षणं धर्मं उपदिदेश। लोकेषु भाग्यदृष्टिषु पद्धुलेषु स धर्मोपदेशः पुरुषमतिमात्रप्रमाणैः कदर्थितोऽभवत्। ततश्च लोकेषु धर्मसंस्कारवैरल्येन न यज्ञा अप्रथन्त। शान्त्यादयो गुणाः व्यलीयन्त। न स्वर्गः नापवर्गः। कामक्रोधादिरिपुवर्गचेष्टिताः ऐहिकमपि जीवनं सुखं अनुभवितुं अप्रभवः नानापुरुषमतिकल्पितेषु मताभासेषु श्रद्धामाकलयन्तोऽपि अलब्धचेतःप्रसादाः जन्मैव अमोघयन्। तदात्वे भगवान उमाजानिः श्रीशङ्कराचार्यरूपेणावतीर्य श्रौतं धर्मोपदेशं स्थिरीचकार। अत एव अधुनापि भारते श्रौतसंप्रदायं वयं निरीक्षितुं अनुष्ठातुं स्वर्गापवर्गावधिगन्तुं च शक्नुमः। तादृशानां परमाचार्याणां जीवितचरित्राणि ज्ञातुं स्मर्तुं च अभिलषतामपि तदवगमकानां पुस्तकानामनुपलम्भो हि चेतस्तोदावहः। सन्ति च आचार्यचरित्रावगमकानि कानिचित् काव्यानि तत्तत्कालप्रथितचरित्रावलंबानि। तेषु माधवीयशङ्करविजयाख्यं काव्यं द्राधीयसा कालेन आसेतोः आहिमगिरिशिखरं समग्रे भारते पण्डितैः प्रमाणतया अभ्युपगतं श्री शङ्करजयन्त्यादिषु पारायणप्रवचनादिषु प्रयुज्यमानं आस्ते। भगवत्पादप्रतिष्ठिताम्नायपीठचतुष्टयाधिपतयः चत्वारोऽप्याचार्याः इदं काव्यं चिरायांगीकुर्वन्ति।

तादृशस्यास्य काव्यस्य परिचयं आंग्लभाषाविदोऽपि संपादयन्त्विति संकल्पेन भगवत्पादेषु भक्त्या च श्रीसुब्बरत्नार्यैः अस्मच्छिष्यवरैः धर्मकार्यनिरतैः आंग्लानुवादः प्रतिपदं व्यरच्यत। तदिदमवलोक्य वयं नन्दामः तांश्च अभिनन्दामः। आशास्महे च सानुवादं काव्यमिदं सर्वत्र शांकरीं भक्तिं पुष्णत्, धर्ममार्गे जनान् प्रेरयत्, सहृदयहृदयानन्ददं चिरं प्रकाशतां, श्री सुब्बरत्नार्याश्च मद्भपरंपरा मजमानाश्चिरं जीयासुरिति।




शृङ्गगिरिः,
29—8—72.

इति नारायणस्मरणम्

॥ श्रीः ॥

# ॥ उपोद्घातः ॥

विदितमेव हि समेषां मानवानां सनातनश्रौतधर्मानुगामिनां विभिन्नमतावलम्बिनामपि भारतीयानां, परमपावनं सर्वमङ्गलावहं श्रीमच्छङ्करभगवत्पादाचार्यनामधेयम्। एत एव हि वेदमार्गविदूषकाणां नास्तिकानां वादान् सर्वतो निराकृत्य कर्मभक्तिज्ञानानां आम्नायविधेयानां सर्वश्रेयःप्रापकाणां प्रतिष्ठामकार्षुः। तस्मादेवेदानीमपि सर्वे वयं वैदिके वर्त्मनि निष्प्रतिबन्धं गन्तुं प्रभवामः।

अमी हि महात्मानः क्रैस्तवाष्टमशताब्द्यां केरलप्रान्ते कालटिनामके ग्रामे पूर्णातीरवर्तिनि, आर्याशिवगुरुदम्पत्योः कुमारो भूत्वा, बाल्ये विद्याभ्यासदशायामेव दीनायाः विप्रपत्न्याः दारिद्र्यं स्वर्णामलकवृष्ट्या दूरीकृत्य, स्वीयमातुरनुज्ञया स्वीकृत्य पारिव्राज्यं, लब्ध्वा च श्रीगोविन्दभगवत्पादान्महावाक्योपदेशं, गत्वा च तदाज्ञया वाराणसीक्षेत्रं, श्रीविश्वेश्वरानुग्रहेण ब्रह्मसूत्रोपनिषद्गीतादीनां भाष्याणि याथार्थ्यप्रदर्शकानि, बहूनि प्रकरणानि स्तोत्राणि च विरचय्य, मीमांसकमूर्धन्यं मण्डनं वादे विजित्य, सुरेश्वरसमाख्यया संन्यासाश्रमं स्वीकृतवन्तं च तं शिष्यत्वेन परिगृह्य, सुरेश्वरपद्मपादहस्तामलकतोटकादिभिरनेकैः शिष्यैः सह आसेतुहिमाचलं यात्रां कृत्वा, तत्र तत्र नानासिद्धान्तावलम्बिनः द्वैतिनः सर्वानपि वादे विजित्य, कृत्वा च तानद्वैतसिद्धान्तानुसारिणः, शृङ्गेरीपुण्यक्षेत्रं संप्राप्य तत्र ब्रह्मविद्यास्वरूपिणीं श्रीशारदादेवीं प्रतिष्ठाप्य, तत्र भाष्यादिकमध्यापयन्तः द्वादश वत्सरान् उषित्वा ततः शृङ्गगिरिद्वारकापुरी बदरीषु लोकानुग्रहाय चतुराम्नायपीठानि संस्थाप्य, तेषु च स्वीयमुख्यशिष्यान् श्रीसुरेश्वरपद्मपादहस्तामलकतोटकाचार्यान् जगद्गुरुपदे

नियोज्य, काश्मीरे सर्वज्ञपीठं समारुह्य केदारे तिरोधानं प्रापुः। इमां च कथां एकेन श्लोकेन संक्षिप्य वर्णयामासुः श्रीमाप्पस्वामिनः —

आर्याम्बाजठरे जनिर्द्विजसतीदारिद्र्यनिर्मूलनम्
संन्यासाश्रयणं गुरूपसदनं श्रीमण्डनादेर्जयः।
शिष्यौघग्रहणं सुभाष्यरचनं सर्वज्ञपीठाश्रयः
पीठानां रचनेति संग्रहमयी सैषा कथा शांकरी॥

श्रीशङ्करभगवत्पादीयं वृत्तान्तं सर्वमपि महता विस्तरेण सहृदयहृदयंगमया रीत्या सरसं प्रतिपादयत् संक्षेपशङ्करविजयनामकं महाकाव्यं षोडशसर्गात्मकं १८४३ श्लोकसंयुतं श्रीमाधवाचार्या रचयामासुः। काव्ये चास्मिन् द्वादशे सर्गे ६३ श्लोकप्रभृति सप्तसु श्लोकेषु भगवत्पादानां शृङ्गेरीक्षेत्रागमनं तत्र भाष्याध्यापनं, श्रीशारदाप्रतिष्ठा, तत्पूजाप्रवर्तनं इत्यादिवृत्तान्तं अभिधाय अन्ते सर्वस्मिन्नपि समये श्रीशारदादेव्या क्रियमाणमनुग्रहं वर्णयन्ति।

या शारदाम्बेत्यभिधां वहन्ती कृतां प्रतिज्ञां परिपालयन्ती।
अद्यापि शृङ्गेरिपुरे वसन्ती प्रद्योततेऽभीष्टवरान् दिशन्ती॥

महाकाव्यलक्षणपरिपूर्णेऽस्मिन् ग्रन्थे पदलालित्यं, शब्दार्थमाधुर्यं, वर्णनाप्रकर्षः, रसालङ्कारपूर्णता, अनुप्रासादिकं इत्यादयः सहृदयहृदयरञ्जकाः उत्कर्षाः भूयिष्ठमुल्लसन्तीत्येतत् न तिरोहितं वाचकवरेण्यानामिति नात्र तद्विस्तरः क्रियते।

माधवाचार्याः श्रीसद्गुरोरनुग्रहात् वाग्देवीकरुणारसपरिपूरितकटाक्षलाभेन च लोकोत्तरसर्वाश्चर्यावहकविताचातुरीसंपन्ना अपि वैराग्यसंपूर्णमानसाः शमदमादिसद्गुणसंपन्नाः साधारणकाव्यविरचनमयुक्तमिव पश्यन्तो विचिन्त्य परमहंसपरिव्राजकमेव काव्यनायकत्वेन प्रकल्प्य, शान्तिरसप्रधानं नानाशास्त्रार्थगर्भितं अविद्यानिवर्तकतत्त्वज्ञानफलकमिदं

महाकाव्यं रचयामासुः। 'नेता यत्रोल्लसति भगवत्पादसंज्ञो महेशः शान्तिर्यत्र प्रकृचति रसः शेषवानुज्ज्वलाद्यैः। यत्राविद्याक्षतिरपि फलं'

अत एव बालसंन्यासिनः केचित् संस्कृतभाषाव्युत्पत्तये इमं महाकाव्यं गुरोः सकाशे पठन्ति। भाषाव्युत्पत्तिः पदवाक्य प्रयोग-प्रावीण्यं व्याकरणपरिचयः नानाशास्त्रविषयावगतिः अनुष्ठेयधर्माव-बोध इत्यादिफलमेतत्पठितॄणां संजायते। यद्यपि श्रीशङ्करभगवत्पादानां असाधारणमहिमा सार्वज्ञ्यबुद्धिप्रकर्षादिप्रदर्शकतदीयभाष्यादिग्रन्थैरेव सम्यगवबोद्धुं शक्यते, तथापि सामान्यप्रज्ञावतां तदीयप्रौढग्रन्थ-परिशीलने सामर्थ्याभावात् तदीयाद्भुतचरितद्वारैव तन्महिमपरिज्ञानं तेषां संभवति। वस्तुतस्तु विदुषामपि प्रथमतः चरित्रपरिशीलनेन तन्महिमातिशये अवगते सति प्रामाणिकत्वबुद्धिनिश्चयोदयात् पश्चात् तद्ग्रन्थपरिशीलनेन तन्महिमज्ञानं नितरां सुदृढं भवति। अत एव बादरायणाचार्याः 'जन्माद्यस्य यतः' इति द्वितीयसूत्रेण मनसा-ऽप्यचिन्त्यरचनारूपस्य अस्य प्रपञ्चस्य सृष्टिस्थितिविनाशकर्तृत्वरूपं माहात्म्यं अभिधाय पश्चात् शास्त्रयोनित्वात् इति तृतीयसूत्रेण वेदकर्तृत्वेन हेतुना तादृशमहिमानं द्रढयन्ति।

ग्रन्थोऽयमितः पूर्वं अन्यत्र मुद्रितोपि अधुना दौर्लभ्यात् आसेतुहैमाचलं सर्वत्र अस्यैव ग्रन्थस्य पारायणकरणाय उपन्यासाद्यर्थं च बहुभिरपेक्ष्यमाणत्वात् इदानीं आंग्लानुवादसहितः मुद्राप्यते सर्वेऽपि प्रबन्धमिमं स्वीकृत्य, सार्थावबोधं पठित्वा, कृत्वा च पारायणं, लब्ध्वा च भगवत्पादानामनुग्रहं, संप्राप्नुयुः सर्वाण्यपि श्रेयांसी सद्गुरुरूपिणं भगवन्तं प्रार्थये।

इत्थं
व्याकरणशिरोमणिः, वेदान्तविद्वान्
के. एस्. वेङ्कटरामशास्त्री।

श्रीरङ्गम्,
1—9—72

॥ श्रीः ॥

# ॥ विषयानुक्रमणिका ॥



शुभम् ।

# INTRODUCTION

The biographer's concern is to record the worthwhile incidents in the life of his hero and relate their impact upon contemporary society. The hagiographer invests his saint with an atmosphere of halo and charisma. To write the life of a God-Man, an *avatar*, requires a different kind of talent and approach. The *avatar* appears to live and move among men, but is ever conscious of his divinity, and whatever he does and says are meant to kindle the spark of divinity hidden in men. His life is a standing message for all times to come. It is only men endowed with a rather high level of spirituality that can write the life of an *avatar*. Such a poet was Mādhava, steeped in the lore of the Upanishads and Āgamas. To his several attainments Mādhava added a rare gift of poesy. He was familiar with the nuances of Samskrit speech and rules of poetic composition pertaining to metres, figures of speech, modes of description etc., all defined in the *Alankāra Śāstra*. The work of a poetic composition largely depends upon how the poet displays the several *rasās*. Incidents in this poem such as Śamkara's banter in response to the insolence of Visvarūpa, the anguish of Aryāmbā when her only son left her, that of the noble-minded housewife not being able to give proper alms to Brahmachari Śamkara and that of King Rājaśekhara and Padmapāda when their works were consumed by fire, and the sequel in each case, which apart from the relief

that followed, imparted a sense of wonderment, the awe-inspiring scene of God Narasimha pouncing upon Ugrabhairava and the other one of *Karkacha*, the *Kapalika*, whose boasted supernatural powers brought about his own destruction, the master restoring life to a dead boy — all these evoke the appropriate *rasa*, but the greatest of them all, *sānta rasa* permeates the entire poem.

Hyperbole *(atiśayokti)* is largely resorted to by poets, and Mādhava was no exception. There are instances here and there which well nigh tax the susceptibility of the reader. By mere *Humkara*, Śamkara reduced a host of Kāpalikas to ashes; a statement like this does not accord with the basic character of Śamkara, whose mission was 'to do good' to all. In this case the incident has to be taken in an allegorical sense. By pronouncing the *Mantra HUM*, Śamkara did not burn their bodies but their inflated ego, steeped in false knowledge and gruesome rituals. In another place (XVI–90) the poet waxes eloquent and declares that the ascension by Śamkara of the *Sarvajñapiṭha* marked the rout of the rival schools. It was not Śamkara's mission to *destroy* any school. He unerringly pointed out the inadequacies in them — such as would not help in the realization of the Absolute Truth of Brahman; otherwise these schools served as stepping stones to reach the summit of Advaita Knowledge.

Anachronism, which often goes with hyperbole, is pardonable in a poet. When Mādhava introduces

Haradatta and Śrīkaṇṭha as opponents of Śamkara in a polemical contest, he must have introduced them not as individuals, but as types of the class to which they belonged.

In his description of sylvan and rural scenes—such as rivers, forests, groves and *agrahārams* Mādhava has deftly caught nature in her gentle and benign moods quite in accord with the theme of the poem.

Sudhanva is a creation of the poet. Though an impressive character, he serves only one purpose—he seems to impart a certain amount of verve to Śamkara's itinerary. It is to the credit of Mādhava that he does not indulge in frenzied tales and phantasms that fill the pages of some other *Śamkara Vijayams*.

Certain features stand out in the poem. One is the high place that is accorded to women. The Devi is the mother of the gods; and Āryambā, the mother of this *avatar* is a manifestation of the Divine Mother, who, like her son, chose to behave like an ordinary mortal. In Āryambā we find an extra-ordinary capacity for renunciation. And her great son gave her preference over the gods by thinking of her and mentally paying her homage while bathing in the confluence of the rivers in Prayāga, and after her demise he set at naught the threat of Nambutiri philistines, performed the last rites and sped her soul to the 'immortal realms of light'. The Divine Mother in another aspect—that of the Goddess of

Wisdom appeared as Bhāratī. It is not that she presided over the discomfiture of her husband—no Hindu wife would do that—but over the triumph of Renunciation and Jñāna over barren Ritualism the goal of which was the attainment of ephemeral pleasures here and hereafter.

The *stotras* to Vyāsa and the Gurus, to Harihara and to Devi Mūkāmbā have a fascination of their own. The hymn to Harihara is a delightful example of *śleṣha (double entendre)* wherein every one of the string of epithets applies both to Vishṇu and Śiva. The hymns to Devi Mūkambā reveals the adept in *Mantra* and *Yoga śāstra* that Mādhava was. The source of this hymn, which is an epitome of some aspects of Śrī Vidyā Sādhana, is hinted at in the words ये प्रत्यभिज्ञामतपारविज्ञा—it is the Śākta branch of the Kashmir school of *Pratyabhijña*, which is of the *Samaya* creed and is the nearest approach to Advaita. It may be observed in passing, that this affords a clue to the identity of Mādhava. *Kavi* the Samskrit word for *poet* means also *Seer*. Mādhava was a poet-seer. Before his mind's eye must have passed a panaroma of the incidents of Śamkara's life. And in presenting the facts thereof, he has evoked Śamkara, the compassionate who listened to the woes of the poor and rich alike and gave them relief; Śamkara, the 'prince of *Parivrājakas*' who taught the learned scholars in Vāraṇāsi and other centres of learning, the *Ātmavidya*, and conveyed the same knowledge in simple verses to the commonfolk whom he visited in their towns and

villages, Śamkara, the master polemic, who with the very weapons of logic and dialectics his adversaries were proficient in, deftly vanquished them, and Śamkara, the great harmoniser, who gave equal importance to all forms of worship, and taught how through devotional and singleminded worship of any *Saguṇa* form, one might in the end transcend it and attain the knowledge of the Formless Absolute. Mādhava's poem is an introduction to an advanced study of Advaita. A reverential study of (*Pārāyaṇam*) of *Mādhavīyam* is a form of paying homage to Samkara Bhagavatpāda.

Mr. K. V. Subbaratnam has the necessary qualification to translate this poem. He has brought to bear upon the work of translation not only his ripe scholaraship but a devotional approach, so necessary to get into the heart of a work like this. The translation is a real boon to all seekers of Truth, who are not acquainted with Samskrit.

Madras - 28<br>September 1972

K. R. VENKATARAMAN.

## TRANSLATER'S NOTE

Sri Adi Samkara Bhagavatpada is a world teacher, meant not for the century or country of his birth but for all times and climes. Rarely is a saint or prophet born, who can talk to people beyond his country or times. Such great men are only the incarnations of God, sent to this earth for the uplift and redemption of the human race. Their teachings are meant for every human being, transgressing caste, creed or race. For they contain truths of eternal value. Such a great Saint is Sri Adi Samkaracharya acknowledged by all, whether they live in the western or eastern hemisphere of the world. As years roll on, we find his teachings spreading in every country, attracting even those that are not Hindus or Indians. The absolute monoism preached by him in his works is now being accepted as the final goal of human thought,

If only this saint had been born in any other part of the world, like America or Europe, they would have maintained a record of the details of his life. But in our country we never maintain such notes and we have to look to tradition for such facts. This results in many modern scholars discussing things and arriving at different conclusions, all of their own choice. Fortunately, his works have been well retained by the traditional method of teaching and we have them all now in print. As regards the details of his life, we

have very few records. In this aspect the work, Madhaviya Samkara Vijayam gets an enhanced value for us. Tradition has it that it was written by Sri Madhava, who later on became an ascetic and occupied the illustrious Pitha at Sringeri with the name of Sri Vidyaranya (1380-1386 A. D.). The author has done a great service to the world by bringing into existence this valuable work with so many details, which the world would have otherwise lost by sheer efflux of time.

The author is as may be seen from the work, not a mere scholar but a poet, philosopher and biographer — all in one. Every verse of his, discloses his supreme erudition in Samskrit language, with all its beauty of diction, grammar and figures of speech. In dealing with the life of the great world teacher, the author has risen to the high level of his hero when he deals with the discussions on the subjects of philosophy. Very rarely do we find such equal capacity between the hero and the author. Such a distinction goes to the Sringeri Pitham, of which the author was an illustrious pontiff.

My esteemed friend Mr. K. R. Venkatarama Iyer has in his scholarly introduction dealt with the capacity of the poet in the author. Anything, which I may say, will be only a repetition.

Having chosen for his Kavya the life of an avatar, the author seems to have adopted the prologue in Sri Valmiki Ramayana leading to the birth of the

Great Man. Like the rishis, suffering from the misdoings of Ravana, approaching Lord Vishnu for coming down on this earth for redeeming the suffering people, the gods approach Lord Siva and pray for his incarnation on earth for destroying the ill-doctrined schools of thought and philosophy and for restoring the greatness of the Holy Scripture and its essence; and Lord Siva, with the other Gods, takes human form and they are born on this earth. The poet would give a high status even to the four disciples of Sri Samkara by telling us that they are also incarnations of various Gods. The reader can well follow the details in the I chapter of the book. As a great poet, the author has also attempted to teach the public as to how marriages should be arranged and performed; this is the kavya part of it. Chapters XV and XVI bring out the best of philosophy in the author. All schools of thought are mentioned as the subject matter of debate between Sri Samkara and his opponents and the reader can get an easy insight into the doctrines of all the schools by a mere reading of the Chapters.

In chapter X the poet describes how Sri Samkara entered the body of the dead King Amaruka and learnt and exhibited his knowledge of (Kama-sastra) the science of love, with a view to defeat Sri Saraswathi in debate and get the fame of an all-knowing (Sarvajna) and did succeed in the attempt. Some recent scholars may doubt the truth of this version and ask " Can an ascetic do this? Would not his body get tainted by such a conduct?" We should

remember that we are dealing with the life of a superman, whose powers are unlimited. It looks as though the author has anticipated this question and he deals with this aspect in chapter XVI when the pandits question Sri Samkara about this assumed defect in him and the explanation is given in the words of Sri Samkara by the author. Though tradition would ascribe the authorship of the work Amarusatakam to Sri Samkara, yet research shows that it is the work of a poet by name Amaruka Kavi. That does not in any way affect the conclusion mentioned above.

As far as I know, there is no translation in English for this important work. A Tamil Translation has been done in 1955 by Pandit Sri N. S. Ananthakrishna Sastrigal, Retired Sanskrit Teacher, Udamalpet, but copies of the same are not now available. I owe the idea of an English Translation to the same gentleman, who suggested it to me some years ago. I know that I do not possess sufficient proficiency for the same. But, when I submitted this idea to the present Jagadguru Sri Samkaracharya of Sringeri, H. H. not only blessed me and directed me to proceed with it but also gave me the necessary finance for bringing out the book. And at the command of H. H., my friend, Sri J. Subramania Iyer, Advocate, Gobi, gave me additional financial assistance, from out of a charity fund in his control, for the publication of this book. In my anxiety to make the non-sanskrit reader follow the text, while he reads

the translation, I could not give a better and flowing language, for which I crave pardon of every reader. If the reader, after going through the translation, gets a desire to read the text directly and understand it, I would have fulfilled my desire in bringing out this book. I do not claim to have done the translation in the best form.

H. H. the Jagadguru Samkaracharya, Sringeri Sarada Pitham has graciously blessed me with a Srimukham printed in the book. But for His blessings, I would not have done even this much of a translation. My pranams to that great Jivanmukta.

To my esteemed friend and guide Sri K. R. Venkatarama Iyer, who has so kindly taken the trouble of providing me with an introduction, showing research and erudition, I feel very much indebted.

My thanks are also due to the Sri Vani Vilas Syndicate Ltd., Srirangam, who have printed the book in a very neat and attractive manner and thus helped me to serve the noble cause, which prompted me to take up the work of this translation.

I hope this book will find a place in the library of every seeker after truth, so that they can read at least a portion of it every day and get the blessings of Sri Samkara Bhagavatpada.

Erode
October 1972

K. V. SUBBARATNAM,
*Advocate.*



श्रीमच्छङ्करभगवत्पूज्यपादाः ।



॥ श्रीगुरुचरणारविन्दाभ्यां नमः ॥

श्रीविद्यारण्यविरचितः

# ॥ श्रीमच्छङ्करदिग्विजयः ॥

## ॥ प्रथमः सर्गः ॥

### (उपोद्घातः)

प्रणम्य परमात्मानं श्रीविद्यातीर्थरूपिणम् ।
प्राचीनशङ्करजये सारः संगृह्यते स्फुटम् ॥ १ ॥

यद्वद्घटानां पटलो विशालो विलोक्यतेऽल्पे किल दर्पणेऽपि ।
तद्वन्मदीये लघुसंग्रहेऽस्मिन्नुद्वीक्ष्यतां शाङ्करवाक्यसारः ॥ २ ॥

यथाऽतिरुच्ये मधुरेऽपि रुच्युत्पादाय रुच्यान्तरयोजनार्हा ।
तथेष्यतां प्राक्-कवि-हृद्य-पद्येष्वेषाऽपि मत्पद्य-निवेशभङ्गी ॥ ३ ॥

स्तुतोऽपि सम्यक् कविभिः पुराणैः कृत्याऽपि नस्तुष्यतु भाष्यकारः ।
क्षीराब्धिवासी सरसीरुहाक्षः क्षीरं पुनः किं चकमे न गोष्ठे ॥ ४ ॥

पयोब्धिविवरीसुनिःसृतसुधाझरीमाधुरी-
धुरीणभणिताधरीकृतफणाधराधीशितुः ।
शिवङ्करसुशङ्कराभिधजगद्गुरोः प्रायशो
यशो हृदयशोधकं कलयितुं समीहामहे ॥ ५ ॥

क्वेमे शङ्करसद्गुरोर्गुणगणा दिग्जालकूलङ्कषाः
    क्वालोन्मीलितमालतीपरिमलावष्टम्भमुष्टिंधयाः ।
क्वाहं हन्त तथाऽपि सद्गुरुकृपापीयूषपारम्परी-
    मग्नोन्मग्नकटाक्षवीक्षणबलादस्ति प्रशस्तार्हता ॥ ६ ॥

धन्यंमन्यविवेकशून्यसुजनंमन्याब्धिकन्यानटी-
    नृत्योन्मत्तनराधमाधमकथासंमर्ददुष्कर्दमैः ।
दिग्धां मे गिरमद्य शङ्करगुरुक्रीडासमुद्यद्यशः-
    पारावारसमुच्चलज्जलधरैः संक्षालयामि स्फुटम् ॥ ७ ॥

वन्ध्यासूनुखरीविषाणसदृशक्षुद्रक्षितीन्द्रक्षमा-
    धौरेयौदार्यदयादिवर्णनकलादुर्वासनावासिताम् ।
मद्वाणीमधिवासयामि यमिनस्त्रैलोक्यरङ्गस्थली-
    नृत्यत्कीर्तिनटीपटीरपटलीचूर्णैर्विकीर्णैः क्षितौ ॥ ८ ॥

पीयूषद्युतिखण्डमण्डनकृपारूपान्तरश्रीगुरु-
    प्रेमस्थेमसमर्हणार्हमधुरव्याहारसूनोत्करः ।
प्रौढोऽयं नवकालिदासकवितासन्तानसंतानको
    दद्यादद्य समुद्यतः सुमनसामामोदपारम्परीम् ॥ ९ ॥

आमोदैरनुमोदिता मृगमदैरानन्दिता चन्दनै-
    र्मन्दारैरभिनन्दिता प्रियगिरा काश्मीरजैः स्मेरिता ।
वागेषा नवकालिदासविदुषो दोषोज्झिता दुष्कवि-
    ग्रावैर्निष्करुणैः क्रियेत विकृता धेनुस्तुरुष्कैरिव ॥ १० ॥

यद्वा दीनदयालवः सहृदयाः सौजन्यकल्लोलिनी-
    दोलान्दोलनखेलनैकरसिकस्वान्ताः समन्तादमी ।

सन्तः सन्ति परोक्तिमौक्तिकजुषः किं चिन्तयाऽनन्तया
यद्वा तुष्यति शङ्करः परगुरुः कारुण्यरत्नाकरः ॥ ११ ॥

उपक्रम्य स्तोतुं कतिचन गुणाञ्छङ्करगुरोः
प्रभग्नाः श्लोकार्धे कतिचन तदर्धार्धरचने ।
अहं तुष्टूषुस्तानहह कलये शीतकिरणं
कराभ्यामाहर्तुं व्यवसितमतेः साहसिकताम् ॥ १२ ॥

तथाऽप्युज्जृम्भन्ते मयि विपुलदुग्धाब्धिलहरी-
ललत्कल्लोलालीलसितपरिहासैकरसिकाः ।
अमी मूकान्वाचालयितुमपि शक्ता यतिपतेः
कटाक्षाः किं चित्रं भृशमघटिताभीष्टघटने ॥ १३ ॥

अस्मज्जिह्वाग्रसिंहासनमुपनयतु स्वोक्तिधारामुदाराम्
अद्वैताचार्यपादस्तुतिकृतसुकृतोदारता शारदाम्बा ।
नृत्यन्मृत्युञ्जयोच्चैर्मुकुटतटकुटीनिस्सरत्स्वःस्रवन्ती-
कल्लोलोद्वेलकोलाहलमदलहरीखण्डिपाण्डित्यहृद्याम् ॥ १४ ॥

क्वेदं शङ्करसद्गुरोः सुचरितं क्वाहं वराकी कथं
निर्वक्ष्यामि चिरार्जितं मम यशः किं मज्जयस्यम्बुधौ ।
इत्युक्त्वा चपला पलायितवतीं वाचं नियुङ्क्ते बलात्
प्रत्याहृत्य गुणस्तुतौ कविगणश्लिष्टं गुरोर्गौरवम् ॥ १५ ॥

रूक्षैकाक्षरवाङ्निघण्टुशरणैरौणादिकप्रत्यय-
प्रायैर्हन्त यङन्तदन्तुरतरैर्दुर्बोधदूरान्वयैः ।
क्रूराणां कवितावतां कतिपयैः कष्टेन कृष्टैः पदै-
र्दीना स्यादनघा किरातविततेरेणीव वाणी मम ॥ १६ ॥

नेता यत्रोल्लसति भगवत्पादसंज्ञो महेशः
शान्तिर्यत्र प्रकचति रसः शेषवानुज्ज्वलाद्यैः।
यत्राविद्याक्षतिरपि फलं तस्य काव्यस्य कर्ता
धन्यो व्यासाचलकविवरस्तत्कृतिज्ञाश्च धन्याः ॥ १७ ॥

तत्रादिम उपोद्घातो द्वितीये तु तदुद्भवः।
तृतीये तत्तदमृतान्धोवतारनिरूपणम् ॥ १८ ॥

चतुर्थसर्गे तच्छुद्धाष्टमप्राक्चरितं स्थितम्।
पञ्चमे तद्योग्यसुखाश्रमप्राप्तिनिरूपणम् ॥ १९ ॥

महताऽनेहसा येषा सम्प्रदायागता गता।
तस्याः शुद्धात्मविद्यायाः षष्ठे सर्गे प्रतिष्ठितिः ॥ २० ॥

तद्वयासाचार्यसन्दर्शविचित्रं सप्तमे स्थितम्।
स्थितोऽष्टमे मण्डनार्यसंवादो नवमे मुनेः ॥ २१ ॥

वाणीसाक्षिकसार्वज्ञनिर्वाहोपायचिन्तनम्।
दशमे योगशक्त्या भूपतिकायप्रवेशनम् ॥ २२ ॥

बुबुध्वा मीनध्वजकलास्तत्प्रसङ्गप्रपञ्चनम्।
सर्ग एकादशे तूग्रभैरवाभिधनिर्जयः ॥ २३ ॥

द्वादशे हस्तधान्यार्यतोटकोभयसंश्रयः।
वार्तिकान्तत्रयविद्याचालनं तु त्रयोदशे ॥ २४ ॥

चतुर्दशे पद्मपादतीर्थयात्रानिरूपणम्।
सर्गे पञ्चदशे तूक्तं तदाशाजयकौतुकम् ॥ २५ ॥

षोडशे शारदापीठवासस्तस्य महात्मनः।
इति षोडशभिः सर्गैर्व्युत्पाद्या शाङ्करी कथा ॥ २६ ॥

सैषा कलिमलच्छेत्री सकृच्छ्रुत्याऽपि कामदा ।
नानाप्रश्नोत्तरै रम्या विदामारभ्यते मुदे ॥ २७ ॥

एकदा देवता रूप्याचलस्थमुपतस्थिरे ।
देवदेवं तुषारांशुमिव पूर्वाचलस्थितम् ॥ २८ ॥

प्रसादानुमितस्वार्थसिद्धयः प्रणिपत्य तम् ।
मुकुलीकृतहस्ताब्जा विनयेन व्यजिज्ञपन् ॥ २९ ॥

विज्ञातमेव भगवन् विद्यते यद्धिताय नः ।
वञ्चयन् सुगतान् बुद्धवपुर्धारी जनार्दनः ॥ ३० ॥

तत्प्रणीतागमालम्बैर्बौद्धैर्दर्शनदूषकैः ।
व्याप्तेदानीं प्रभो धात्री रात्रिः संतमसैरिव ॥ ३१ ॥

वर्णाश्रमसमाचारान्द्विषन्ति ब्रह्मविद्विषः ।
ब्रुवन्त्याम्नायवचसां जीविकामात्रतां प्रभो ॥ ३२ ॥

न सन्ध्यादीनि कर्माणि न्यासं वा न कदाचन ।
करोति मनुजः कश्चित् सर्वे पाखण्डतां गताः ॥ ३३ ॥

श्रुते पिदधति श्रोत्रे क्रतुरित्यक्षरद्वये ।
क्रियाः कथं प्रवर्तेरन् कथं क्रतुभुजो वयम् ॥ ३४ ॥

शिवविष्ण्वागमपरैर्लिङ्गचक्रादिचिह्नितैः ।
पाखण्डैः कर्म संन्यस्तं कारुण्यमिव दुर्जनैः ॥ ३५ ॥

अनन्येनैव भावेन गच्छन्त्युत्तमपूरुषम् ।
श्रुतिः साध्वी मदक्षीबैः का वा शावर्यैर्न दूषिता ॥ ३६ ॥

सद्यः कृत्तद्विजशिरःपङ्कजार्चितभैरवैः ।
न ध्वस्ता लोकमर्यादा का वा कापालिकाधमैः ॥ ३७ ॥

अन्येऽपि बहवो मार्गाः सन्ति भूमौ सकण्टकाः ।
जनैर्येषु पदं दत्वा दुरन्तं दुःखमाप्यते ॥ ३८ ॥

तद्भवान् लोकरक्षार्थमुत्साद्य निखिलान् खलान् ।
वर्त्म स्थापयतु श्रौतं जगद्येन सुखं व्रजेत् ॥ ३९ ॥

इत्युक्त्वोपरतान् देवानुवाच गिरिजाप्रियः ।
मनोरथं पूरयिष्ये मानुष्यमवलम्ब्य वः ॥ ४० ॥

दुष्टाचारविनाशाय धर्मसंस्थापनाय च ।
भाष्यं कुर्वन् ब्रह्मसूत्रतात्पर्यार्थविनिर्णयम् ॥ ४१ ॥

मोहनप्रकृतिद्वैतध्वान्तमध्याह्नभानुभिः ।
चतुर्भिः सहितः शिष्यैश्चतुर्भिर्हरिवद्भुजैः ॥ ४२ ॥

यतीन्द्रः शङ्करो नाम्ना भविष्यामि महीतले ।
मद्वत्तथा भवन्तोऽपि मानुषीं तनुमाश्रिताः ॥ ४३ ॥

तं मामनुसरिष्यन्ति सर्वे त्रिदिववासिनः ।
तदा मनोरथः पूर्णो भवतां स्यान्न संशयः ॥ ४४ ॥

सुखेन दिविषदः कटाक्षानन्यदुर्लभान् ।
कुमारे निदधे भानुः किरणानिव पङ्कजे ॥ ४५ ॥

क्षीरनीरनिधेर्वीचिसचिवान् प्राप्य तान् गुहः ।
कटाक्षान् मुमुदे रश्मीन् उदन्वान् ऐन्दवानिव ॥ ४६ ॥

अभवचन्दनं स्कन्दं अमन्दं चन्द्रशेखरः ।
दन्तचन्द्रातपानन्दिवृन्दारकचकोरकः ॥ ४७ ॥

शृणु सौम्य वचः श्रेयो जगदुद्वाग्गोचरम् ।
काण्डत्रयात्मके वेदे प्रोद्धृते स्याद् द्विजोद्धृतिः ॥ ४८ ॥

तद्रक्षणे रक्षितं स्यात्सकलं जगतीतलम् ।
तदधीनस्ततो वर्णाश्रमधर्मततेस्ततः ॥ ४९ ॥

इदानीमिदमुद्धार्यमिति वृत्तिमतः पुरा ।
मम गूढाशयविदौ विष्णुशेषौ समीपगौ ॥ ५० ॥

मध्यमं काण्डमुद्धर्तुमनुज्ञातौ मयैव तौ ।
अवतीर्णांशतो भूमौ सङ्कर्षणपतञ्जली ॥ ५१ ॥

मुनी भूत्वा सुदोपास्तियोगकाण्डकृतौ स्थितौ ।
अग्रिमं ज्ञानकाण्डं तूद्धरिष्यामीति देवताः ॥ ५२ ॥

सम्प्रति प्रतिजाने स्म जानात्येव भवानपि ।
जैमिनीयनयाम्भोधेः शरत्पर्वशशी भव ॥ ५३ ॥

विशिष्टं कर्मकाण्डं त्वमुद्धर ब्रह्मणः कृते ।
सुब्रह्मण्य इति ख्यातिं गमिष्यसि ततोऽधुना ॥ ५४ ॥

नैगमीं कुरु मर्यादामवतीर्य महीतले ।
निर्जित्य सौगतान्सर्वानाम्नायार्थविरोधिनः ॥ ५५ ॥

ब्रह्माऽपि ते सहायार्थं मण्डनो नाम भूसुरः ।
भविष्यति महेन्द्रोऽपि सुधन्वा नाम भूमिपः ॥ ५६ ॥

तथेति प्रतिजग्राह विधेरपि विधायिनीम् ।
सुधानीकपतिर्वाणीं सुधाधारामिव प्रभोः ॥ ५७ ॥

अथेन्द्रो नृपतिर्भूत्वा प्रजा धर्मेण पालयन् ।
दिवं चकार पृथिवीं स्वपुरीममरावतीम् ॥ ५८ ॥

सर्वज्ञोऽप्यसतां शास्त्रे कृत्रिमश्रद्धयाऽन्वितः ।
प्रतीक्षमाणः कार्यार्थं मेलयामास सौगतान् ॥ ५९ ॥

ततः स तारकारातिरजनिष्ट महीतले ।
भट्टपादाभिधो यस्य भूषा दिङ्मुखशामभूत् ॥ ६० ॥

स्फुटयन् वेदतात्पर्यममार्गमिनिषवित्रितम् ।
सहस्रांशुरिवानुरुव्यञ्जितं भासयञ्जगत् ॥ ६१ ॥

राज्ञः सुधन्वनः प्राप नगरीं स जयन् दिशः ।
प्रत्युद्गम्य क्षितीन्द्रोऽपि विधिवत् तमपूजयत् ॥ ६२ ॥

सोऽभिनन्द्याशिषा भूपमासीनः काञ्चनासने ।
तां सभां शोभयामास सुरभिर्धुवनीमिव ॥ ६३ ॥

सभासमीपविटपिश्रितकोकिलकूजितम् ।
श्रुत्वा जगाद तद्व्याजाद्राजानं पण्डिताग्रणीः ॥ ६४ ॥

मलिनैश्चेन्न सङ्गस्ते नीचैः काककुलैः पिक ।
श्रुतिदूषकनिर्ह्रादैः श्लाघनीयस्तदा भवेः ॥ ६५ ॥

षडभिज्ञा निशम्येमां वाचं तात्पर्यगर्भिताम् ।
नितरां चरणस्पृष्टा भुजङ्गा इव चुक्रुधुः ॥ ६६ ॥

छित्त्वा युक्तिकुठारेण बुद्धसिद्धान्तशाखिनम् ।
स तद्ग्रन्थेन्धनैर्शीर्णैः क्रोधज्वालामवर्धयत् ॥ ६७ ॥

सा सभा वदनैस्तेषां रोषपाटलकान्तिभिः ।
बभौ बालातपाताम्रैः सरसीव सरोरुहैः ॥ ६८ ॥

उपन्यस्यत्सु साक्षेपं खण्डयत्सु परस्परम् ।
तेषूदतिष्ठन्निर्घोषो भिन्दन्निव रसातलम् ॥ ६९ ॥

अधः पेतुर्बुधेन्द्रेण क्षताः पक्षेषु तत्क्षणम् ।
व्यूढकर्कशतर्केण तथागतधराधराः ॥ ७० ॥

स सर्वज्ञपदं विद्वेषोऽसहमान इव द्विषाम्।
चकार चित्रविन्यस्तानेतान्मौनविभूषितान्॥ ७१॥

ततः प्रक्षीणदर्पेषु बौद्धेषु वसुधाधिपम्।
बोधयन्बहुधा वेदवचांसि प्रशशंस सः॥ ७२॥

अभाषेऽथ धराधीशो विधायचौ जयाजयौ।
यः पतित्वा गिरेः शृङ्गादव्ययस्तन्मतं ध्रुवम्॥ ७३॥

तदाकर्ण्य मुखान्यन्ये परस्परमलोकयन्।
द्विजाग्र्यस्तु स्मरन् वेदानारुरोह गिरेः शिरः॥ ७४॥

यदि वेदाः प्रमाणं स्युर्भूयात्काचिन्न मे क्षतिः।
इति घोषयता तस्मान्न्यपाति सुमहात्मना॥ ७५॥

किमु दौहित्रदत्तेऽपि पुण्ये विलयमास्थिते।
ययातिश्च्यवते स्वर्गात्पुनरित्यूचिरे जनाः॥ ७६॥

अपि लोकगुरुः शैलात्तूलपिण्ड इवापतत्।
श्रुतिरात्मशरण्यानां व्यसनं नोच्छिनत्ति किम्॥ ७७॥

श्रुत्वा तदद्भुतं कर्म द्विजा दिग्भ्यः समाययुः।
घनघोषमिवाकर्ण्य निकुञ्जेभ्यः शिखावलाः॥ ७८॥

दृष्ट्वा तमक्षतं राजा श्रद्धां श्रुतिषु संदधे।
निनिन्द बहुधाऽऽत्मानं खलसंसर्गदूषितम्॥ ७९॥

सौगतास्त्वब्रुवन्नेदं प्रमाणं मतनिर्णये।
मणिमन्त्रौषधैरेवं देहरक्षा भवेदिति॥ ८०॥

दुर्विधैरन्यथा नीते प्रत्यक्षेऽर्थेऽपि पार्थिवः।
भ्रुकुटीभीकरमुखः सन्धामुग्रजरां व्यधात्॥ ८१॥

पृच्छामि भवतः किञ्चिद्वक्तुं न प्रभवन्ति ये ।
यन्त्रोपलेषु सर्वांस्तान् घातयिष्याम्यसंशयम् ॥ ८२ ॥

इति संश्रुत्य गोत्रेशो घटमाशीविषान्वितम् ।
आनीयात्र किमस्तीति पप्रच्छ द्विजसौगतान् ॥ ८३ ॥

वक्ष्यामहे वयं भूप श्वः प्रभातेऽस्य निर्णयम् ।
इति प्रसाद्य राजानं जग्मुर्भूसुरसौगताः ॥ ८४ ॥

पद्मा इव तपस्तेपुः कण्ठद्वयसपाथसि ।
द्युमणिं प्रति भूदेवाः सोऽपि प्रादुरभूत्ततः ॥ ८५ ॥

संदिश्य वचनीयांशमादित्येऽन्तर्हिते द्विजाः ।
आजग्मुरपि निश्चित्य सौगताः कलशस्थितम् ॥ ८६ ॥

ततस्ते सौगताः सर्वे भुजङ्गोऽस्तीत्यवादिषुः ।
भोगीशभोगशयनो भगवानिति भूसुराः ॥ ८७ ॥

श्रुतभूसुरवाक्यस्य वदनं पृथिवीपतेः ।
कासारशोषग्लानसारसश्रियमाददे ॥ ८८ ॥

अथ प्रोवाच दिव्या वाक् सम्राजमशरीरिणी ।
तुदन्ती संशयं तस्य सर्वेषामेव शृण्वताम् ॥ ८९ ॥

सत्यमेव महाराज ब्राह्मणा यदभाषिरे ।
मा कृथाः संशयं तत्र भव सत्यप्रतिश्रवः ॥ ९० ॥

श्रुत्वाऽशरीरिणीं वाणीं ददर्श वसुधाधिपः ।
मूर्तिं मधुद्विषः कुम्भे सुधामिव सुराधिपः ॥ ९१ ॥

निरस्ताखिलसन्देहो विन्यस्तैतद्दर्शनात् ।
व्यधादाज्ञां ततो राजा वधाय श्रुतिविद्विषाम् ॥ ९२ ॥

आसेतोरातुषाराद्रेर्बौद्धानां वृद्धबालकम्।
न हन्ति यः स हन्तव्यो भृत्यानित्यन्वशान्नृपः ॥ ९३ ॥

दृष्टोऽपि दृष्टदोषश्चेद्वध्य एव महात्मनाम्।
जननीमपि किं साक्षान्नावधीद् भृगुनन्दनः ॥ ९४ ॥

स्कन्दानुसारिराजेन जैना धर्मद्विषो हताः।
योगीन्द्रेणेव योगघ्ना विघ्नास्तत्त्वावलम्बिना ॥ ९५ ॥

हतेषु तेषु दुष्टेषु परितस्तार कोविदः।
श्रौतवर्त्म तमिस्रेषु नष्टेष्विव रविर्महः ॥ ९६ ॥

कुमारिलमृगेन्द्रेण हतेषु जिनहस्तिषु।
निष्प्रत्यूहमवर्धन्त श्रुतिशाखाः समन्ततः ॥ ९७ ॥

प्रागित्थं ज्वलनभुवा प्रवर्तितेऽस्मिन्
कर्माध्वन्यखिलविदा कुमारिलेन।
उद्धर्तुं भुवनमिदं भवाब्धिमग्नं
कारुण्याम्बुनिधिरियेष चन्द्रचूडः ॥ ९८ ॥

इति श्रीमाधवीये तदुपोद्घातकथापरः।
संक्षेपशङ्करजये सर्गोऽयं प्रथमोऽभवत् ॥

(आदितः श्लोकाः ९८)

## ॥ द्वितीयः सर्गः ॥

### (आचार्यजन्मादिकथनम्)

ततो महेशः किल केरलेषु श्रीमद्वृषाद्रौ करुणासमुद्रः ।
पूर्णानदीपुण्यतटे स्वयंभूलिङ्गात्मनाऽनङ्गधगाविरासीत् ॥ १ ॥

स्वप्नोदितः कश्चन राजशेखरः स्वप्ने मुहुर्दृष्टतदीयवैभवः ।
प्रासादमेकं परिकल्प्य सुप्रभं प्रावर्तयत्तस्य समर्हणं विभोः ॥ २ ॥

तस्येश्वरस्य प्रणतार्तिहर्तुः प्रसादतः प्राप्तनिरीतिभावः ।
कश्चित्तदभ्याशगतोऽग्रहारः कालट्यभिख्योऽस्ति महान्मनोज्ञः ॥

कश्चिद्विपश्चिदिह निश्चलधीर्विरेजे विद्याधिराज इति विश्रुतनामधेयः ।
रुद्रो वृषाद्रिनिलयोऽवतरीतुकामो यत्पुत्रमात्मपितरं समरोचयत्सः ॥

पुत्रोऽभवत्तस्य पुरात्तपुण्यैः सुब्रह्मतेजाः शिवगुरुरभिख्यः ।
ज्ञाने शिवो यो वचने गुरुस्तसान्वर्थनामाऽकृत लब्धवर्णः ॥ ५ ॥

स ब्रह्मचारी गुरुगेहवासी तत्कार्यकारी विहिताभभोजी ।
सायं प्रभातं च हुताशसेवी व्रतेन वेदं निजमध्यगीष्ट ॥ ६ ॥

क्रियाद्यनुष्ठानफलोऽर्थबोधः स नोपजायेत विना विचारम् ।
अधीत्य वेदानथ तद्विचारं चकार दुर्बोधतरो हि वेदः ॥ ७ ॥

वेदेष्वधीतेषु विचारितेऽर्थे शिष्यानुरागी गुरुराह तं स्म ।
प्रपाठि मत्तः सषडङ्गवेदो व्यचारि कालो बहुरत्यगात्ते ॥ ८ ॥

भक्तोऽपि गेहं व्रज संप्रति त्वं जनोऽपि ते दर्शनलालसः स्यात् ।
गत्वा कदाचित्स्वजनप्रमोदं विधेहि मा तात विलम्बयस्व ॥ ९ ॥

विधातुमिष्टं यदिहापराह्णे विजानता तत्पुरुषेण पूर्वम्।
विधेयमेवं यदिह श्व इष्टं कर्तुं तदद्येति विनिश्चितोऽर्थः॥ १०॥

कालोप्तबीजादिह यादृशं स्यात्सस्यं न तादृग्विपरीतकालात्।
तथा विवाहादि कृतं स्वकाले फलाय कल्पेत न चेद्वृथा स्यात्॥

आ जन्मनो गणयतो ननु तान्गताब्दा-
न्माता पिता परिणयं तव कर्तुकामौ।
पित्रोरियं प्रकृतिरेव पुरोपनीति
यद्व्यायतस्तनुभवस्य ततो विवाहम्॥ १२॥

तत्तत्कुलीनपितरः स्पृहयन्ति कामं तत्तत्कुलीनपुरुषस्य विवाहकर्म।
पिण्डप्रदात्पुरुषस्य ससन्ततित्वे पिण्डाविलोपमुपरि स्फुटमीक्षमाणाः॥

अर्थावबोधनफलो हि विचार एष
तत्रापि चित्रबहुकर्मविधानहेतोः।
अत्राधिकारमधिगच्छति सद्वितीयः
कृत्वा विवाहमिति वेदविदां प्रवादः॥ १४॥

सत्यं गुरो न नियमोऽस्ति गुरोरधीत-
वेदो गृही भवति नान्यपदं प्रयाति।
वैराग्यवान्व्रजति भिक्षुपदं विवेकी
नो चेद्गृही भवति राजपदं तदेतत्॥ १५॥

श्रीनैष्ठिकाश्रममहं परिगृह्य याव-
ज्जीवं वसामि तव पार्श्वगतश्चिरायुः।
दण्डाजिनी सविनयो बुध जुह्वदग्नौ
वेदं पठन् पठितविस्मृतिहानिमिच्छन्॥ १६॥

दारग्रहो भवति तावदयं सुखाय
यावत्कृतोऽनुभवगोचरतां गतः स्यात् ।
पश्चाच्छनैर्विरसतामुपयाति सोऽयं
किं निह्नुषे त्वमनुभूतिपदं महात्मन् ॥ १७ ॥

यागोऽपि नाकफलदो विधिना कृतश्चेत्
प्रायः समग्रकरणं भुवि दुर्लभं तत् ।
वृष्ट्यादिवन्न हि फलं यदि कर्मणि स्यात्
दिष्ट्या यथोक्तविरहे फलदुर्विधत्वम् ॥ १८ ॥

निःस्वो भवेद्यदि गृही निरयी स नूनं
भोक्तुं न दातुमपि यः क्षमतेऽणुमात्रम् ।
पूर्णोऽपि पूर्तिमभिमन्तुमशक्नुवन्यो
मोहेन शं न मनुते खलु तत्र वत्स ॥ १९ ॥

यावत्तु सत्सु परिपूर्तिरथो अमीषां साधो गृहोपकरणेषु सदा विचारः ।
एकत्र संहतवतः स्थितपूर्वनाशस्तच्चापयाति पुनरप्यपरेण योगः ॥ २० ॥

एवं गुरौ वदति तज्जनको निनीषुरागच्छदत्र तनयं स्वगृहं गृहेशः ।
तेनानुनीय बहुलं गुरवे प्रदाप्य यत्नान्निकेतनमनायि गृहीतविद्यः ॥

गत्वा निकेतनमसौ जननीं ववन्दे
साऽऽलिङ्ग्य तद्विरहजं परितापमौज्झत् ।
प्रायेण चन्दनरसादपि शीतलं तत्
यत्पुत्रगात्रपरिरम्भणनामधेयम् ॥ २२ ॥

श्रुत्वा गुरोः सदनतश्चिरमागतं तं तद्बन्धुरागमदथ त्वरितेक्षणाय ।
प्रत्युद्गमादिभिरसावपि बन्धुतायाः संभावनां व्यधित विप्रकुलानुरूपाम् ॥

वेदे पदक्रमजटादिषु तस्य बुद्धिं संवीक्ष्य तज्जनयिता बहुशोऽप्यपृच्छत् ।
यस्माभवत्प्रथितनाम वसुन्धरायां विद्याधिराज इति सङ्कृतवाच्यमस्य ॥

भाट्टे नये गुरुमते कणभुग्मतादौ
प्रश्नं चकार तनयस्य मतिं बुभुत्सुः ।
शिष्योऽप्युवाच नतपूर्वगुरुः समाधिं
पित्रोदितः स्मितमुखो हसिताम्बुजास्यः ॥ २५ ॥

वेदे च शास्त्रे च निरीक्ष्य बुद्धिं प्रश्नोत्तरादावपि नैपुणीं ताम् ।
दृष्ट्वा तुतोषातितरां पिताऽस्य स्वतः सुखा या किमु शास्त्रतो वाक् ॥

कन्यां प्रदातुमनसो बहवोऽपि विप्रास्तन्मन्दिरं प्रति ययुर्गुणपाशकृष्टाः ।
पूर्वं विवाहसमयादपि तस्य गेहं संबन्धवत्किल बभूव वरीतुकामैः ॥

बह्वर्थदायिषु बहुष्वपि सत्सु देशे कन्याप्रदातृषु परीक्ष्य विशिष्टजन्म ।
कन्यामयाचत सुताय स विप्रवर्यो विप्रं विशिष्टकुलजं प्रथितानुभावः ॥

कन्यापितुर्वरपितुश्च विवाद आसी-
दित्थं तयोः कुलजुषोः प्रथितोरुभूत्योः ।
कार्यस्त्वया परिणयो गृहमेत्य पुत्री-
मानीय तत्र तनयाय सुता प्रदेया ॥ २९ ॥

सङ्कल्पिताद् द्विगुणमर्थमहं प्रदास्ये
मद्गेहमेत्य परिणीतिरियं कृता चेत् ।
अर्थं विना परिणयं द्विज कारयिष्ये
पुत्रेण मे गृहगता यदि कन्यका स्यात् ॥ ३० ॥

कश्चित्तु तस्याः पितरं बभाण मिथः समाहूय विशेषवादी ।
अस्मात्तु गेहं गतवत्स्वमुष्मै विगृह्य कन्यामपरः प्रदद्यात् ॥ ३१ ॥

तेनानुनीतो वरतातभाषितं द्विजोऽनुमेने वररूपमोहितः ।
दृष्टो गुणः संवरणाय कल्पते मन्त्रोऽभिजापश्चिरकालभावितः ॥ ३२ ॥

विद्याधिराजमघपण्डितनामधेयौ संप्रत्ययं व्यतनुतामभिपूज्य देवम् ।
सम्यङ्मुहूर्तमवलम्ब्य विचारणीया मौहूर्तिका इति परस्परमूचिवांसौ ॥

उद्वाह शास्त्रविधिना विहिते मुहूर्ते तौ संमुदं बहुमवापतुरात्तकामौ ।
तत्रागतो भृशममोदत बन्धुवर्गः किं भाषितेन बहुना मुदमाप वर्गः ॥

तौ दंपती सुरसनौ शुभदन्तपङ्क्ती संभूषितौ विकसिताम्बुजरम्यवक्त्रौ ।
सव्रीडहासमुखवीक्षणसंप्रहृष्टौ देवाविवापतुरनुत्तमशर्म नित्यम् ॥ ३५ ॥

अग्नीनधावित महोत्तरयागजातं कर्तुं विशेषकुशलैः सहितो द्विजेन्द्रः ।
तत्तत्फलं हि यदनाहितहव्यवाहः स्यादुत्तरेषु विहितेष्वपि नाधिकारी ॥

यागैरनेकैर्बहुवित्तसाध्यैर्विजेतुकामो भुवनान्ययष्ट ।
व्यस्मारि देवरमृतं तदाशैर्दिने दिने सेवितयज्ञभागैः ॥ ३७ ॥

संतर्पयन्तं पितृदेवमानुषांस्तत्तत्पदार्थैरभिवाञ्छितैः सह ।
विशिष्टचित्तैः सुमनोभिरञ्चितं तं मेनिरे जङ्गमकल्पपादपम् ॥ ३८ ॥

परोपकारव्रतिनो दिने दिने व्रतेन वेदं पठतो महात्मनः ।
श्रुतिस्मृतिप्रोदितकर्म कुर्वतः समा व्यतीयुर्दिनमाससंमिताः ॥ ३९ ॥

रूपेषु मारः क्षमया वसुन्धरा विद्यासु वृद्धो धनिनां पुरःसरः ।
गर्वानभिज्ञो विनयी सदा नतः स नोपलेभे तनयाननं जरन् ॥ ४० ॥

गावो हिरण्यं बहुसस्यमालिनी वसुन्धरा चित्रपदं निकेतनम् ।
संभावना बन्धुजनैश्च सङ्गमो न पुत्रहीनं बहवोऽप्यमूमुदन् ॥ ४१ ॥

अस्यामजाता मम सन्ततिश्चेच्छ्रयवश्यं भवितोपरिष्टात् ।
तत्राप्यजाता तत उत्तरस्यामेवं स कालं मनसा निनाय ॥ ४२ ॥

खिन्नमनाः शिवगुरुः कृतकार्यशेषो
जायामचष्ट सुभगे किमतः परं नौ।
साङ्गं वयोऽर्धमगमत्कुलजे न दृष्टं
पुत्राननं यदिहलोक्यमुदाहरन्ति ॥ ४३ ॥

एवं प्रिये गतवतोः सुतदर्शनं चे-
त्स्वश्चत्यमेप्यदथ नौ शुभमापतिष्यत्।
अस्यास्त्युपायमनिशं भुवि वीक्षमाणो
नेक्षे ततः पितृजनिर्विफला ममाभूत् ॥ ४४ ॥

भद्रे सुतेन रहितौ भुवि के वदन्ति नौ पुत्रपौत्रसरणिक्रमतः प्रसिद्धिः।
लोके न पुष्पफलशून्यमुदाहरन्ति वृक्षं प्रवालसमये फलितं विहाय ॥

इतीरिते प्राह तदीयभार्या शिवाख्यकल्पद्रुममाश्रयावः।
तत्सेवनान्नौ भविता सुनाथ फलं स्थिरं जङ्गमरूपमङ्गम् ॥ ४६ ॥

भक्तेप्सितार्थपरिकल्पनकल्पवृक्षं देवं भजाव कमितः सकलार्थसिद्ध्यै।
तत्रोपमन्युमहिमा परमं प्रमाणं नो देवतासु जडिमा जडिमा मनुष्ये ॥

इत्थं कलत्रोक्तिमनुत्तमां स श्रुत्वा सुतार्थी प्रणतैकवश्यम्।
इयेष सन्तोषयितुं तपोभिः सोमार्धमूर्धानमुमार्धमीशम् ॥ ४८ ॥

तस्योपधाम किल संनिहिताऽऽपगैका
स्नात्वा सदाशिवमुपास्त जले स तस्याः।
कन्दाशनः कतिचिदेव दिनानि पूर्वं
पश्चात्तदा स शिवपादयुगाब्जभृङ्गः ॥ ४९ ॥

जायाऽपि तस्य विमला नियमोपतापैर्विक्लेश्य कायमनिशं शिवमर्चयन्ती।
क्षेत्रे वृषस्य निवसन्त्यमजं स भर्तुः कालोऽत्यगादिति तयोस्तपतोरनेकः ॥

देवः कृपापरवशो द्विजवेषधारी
प्रत्यक्षतां शिवगुरुं गत आत्तनिद्रम् ।
प्रोवाच भोः किमभिवाञ्छसि किं तपस्ते
पुत्रार्थितेति वचनं स जगाद विप्रः ॥ ५१ ॥

देवोऽप्यपृच्छदथ तं द्विज विद्धि सत्यं सर्वज्ञमेकमपि सर्वगुणोपपन्नम् ।
पुत्रं ददान्यथ बहून्विपरीतकांस्ते भूर्यायुषस्तनुगुणानवदद् द्विजेशः ॥

पुत्रोऽस्तु मे बहुगुणः प्रथितानुभावः सर्वज्ञतापदमितीरित आबभाषे ।
दयामुदीरितपदं तनयं तपो मा पूर्णो भविष्यसि गृहं द्विज गच्छ दारैः ॥

आकर्णयन्निति बुबोध स विप्रवर्य-
स्तं चाब्रवीन्निजकलत्रमनिन्दितात्मा ।
स्वप्ने यथेश वनितामणिरस्य भार्या
सत्यं भविष्यति तु नौ तनयो महात्मा ॥ ५४ ॥

तौ दम्पती शिवपरौ नियतौ स्मरन्तौ स्वप्नेक्षितं गृहगतौ बहुदक्षिणाभिः ।
संतर्प्य विप्रनिकरं तदुदीरिताभिराशीर्भिरापतुरनल्पमुदं विशुद्धौ ॥ ५५ ॥

तस्मिन्दिने शिवगुरोरुपभोक्ष्यमाणे भक्ते प्रविष्टमभवत्किल शैवतेजः ।
भुक्त्वाथ विप्रवचनादुपभुक्तशेषं सोऽभुङ्क्त साऽपि निजभर्तृपदाब्जभृङ्गी ॥

गर्भं दधार शिवगर्भमसौ मृगाक्षी गर्भोऽप्यवर्धत शनैरमलच्छरीरम् ।
तेजोऽतिरेकविनिवारितदृष्टिपातबिम्बं रवेर्दिवसमध्य इवोग्रतेजः ॥ ५७ ॥

गर्भालसा भगवती गतिमान्द्यनीप-
दापेति नाद्भुतमिदं धरते शिवं या ।
यो विष्टपानि बिभृते हि चतुर्दशापि
यस्यापि मूर्तय इमा वसुधाजलाद्याः ॥ ५८ ॥

संध्यास्वनापि शरीरमदोपमेव नोपास्तिमातिरसक्तचकतात्र काश्चित्।
यत्पूर्वमेव महता दुरतिक्रमेण व्याप्तं शरीरमदसीयमपुष्य हेतोः ॥५९॥

रम्याणि गन्धकुसुमान्यपि गर्भिमस्यै नाघातुमैशत मरात्किमु भूषणानि।
यद्यद्गुरुत्वरदमस्ति पदार्थजातं तत्तद्विधारणविधावलसा बभूव ॥

तां दौहृदं भृशमबाधत दुःप्रसारि:
प्रायः परं किल न मुञ्चति मुञ्चतेऽपि ।
आनीतदुर्लभमपोहति याचतेऽन्य-
च्चाप्यपोह्य पुनरर्दति साऽन्यवस्तु ॥ ६१ ॥

तां बन्धुताऽऽगमदुपश्रुतदोहदार्तिरादाय दुर्लभमनर्घ्यमपूर्ववस्तु।
आस्वाद्य बन्धुजनदत्तमसौ जहर्ष हा हन्त गर्भधरणं खलु दुःखहेतुः ॥

मानुष्यधर्ममनुसृत्य मयेदमुक्तं काऽपि व्यथा शिवमहोभरणे न यस्याः।
सर्वव्यथाव्यतिकरं परिहर्तुकामा देवं भजन्त इति तत्त्वविदां प्रवादः ॥

उष्णा निसर्गधवलेन महीयसा सा स्वात्मानमैक्षत समूढमुपाचनिद्रा।
संगीयमानमपि गीतविशारदाद्यैर्विद्याधरप्रभृतिभिर्विनयोपपन्नैः॥ ६४॥

आकर्णयज्जय जयेति वरं दधाना
रक्षेति शब्दमवलोकय मा दहेति।
आकर्ण्य नोत्थितवती पुनरुक्तशब्दं
सा विस्मिता किल भृणोति निरीक्षमाणा ॥ ६५ ॥

नर्मोक्तिकृत्यामपि खिद्यमाना क्वापि चञ्चत्तरमञ्चरोहे।
जित्वा मुदाऽन्यानटिहृद्यविद्यासिंहासनेऽसौ स्थितिमीप्सते स्म ॥ ६६॥

समानता सात्त्विकवृत्तिभाजां विरागता वैषयिकप्रवृत्तौ।
तस्याः स्त्रिया गर्भगपुत्रचित्तचरित्रशंसिन्यजनिष्ट चेष्टा ॥ ६७ ॥

तद्रोमवल्ली रुरुचे कुचाद्रयाघूर्णत्प्रभाधुन्युरुशैवलालिः ।
यत्नाच्छिशोरस्य कृते प्रशस्तो न्यस्तो विधात्रेव नवीनवेणुः ॥ ६८ ॥

पयोधरद्वन्द्वमिषादमुष्याः पयःपिबत्यर्थविधानयोग्यौ ।
कुम्भौ नवीनामृतपूरितौ द्वावम्भोजयोनिः कलयांबभूव ॥ ६९ ॥

द्वैतप्रवादं कुचकुम्भमध्ये मध्ये पुनर्माध्यमिकं मतं च ।
सुसूक्ष्मयोगर्भग एव सोऽर्भो द्रागगर्हयामास महात्मगर्ह्यम् ॥ ७० ॥

लग्ने शुभे शुभयुते सुषुवे कुमारं श्रीपार्वतीव सुखिनी शुभवीक्षिते च ।
जाया सती शिवगुरोर्निजतुङ्गसंस्थे सूर्ये कुजे रविसुते च गुरौ च केन्द्रे ॥

दृष्ट्वा सुतं शिवगुरुः शिववारिराशौ
मग्नोऽपि शक्तिमनुसृत्य जले न्यमाङ्क्षीत् ।
व्यश्राणयद्वहु धनं वसुधाश्च गाश्च
जन्मोक्तकर्मविषये द्विजपुङ्गवेभ्यः ॥ ७२ ॥

तस्मिन् दिने मृगकरीन्द्रतरक्षुसिंहसर्पाखुमुख्यबहुजन्तुगणा द्विपन्तः ।
वैरं विहाय सह चेरुरतीव हृष्टाः कण्डूमपाकृषत साधुतया निघृष्टाः ॥

वृक्षा लताः कुसुमराशिफलान्यमुञ्च-
न्नद्यः प्रसन्नसलिला निखिलास्तथैव ।
जाता मुदुर्जलधरोऽपि निजं विकारं
भूमृद्गणादपि जलं सहसोत्पपात ॥ ७४ ॥

अद्वैतवादिविपरीतमतावलम्बिहस्ताग्रवर्तिवरपुस्तकमप्यकस्मात् ।
ऊर्ध्वः पपात जहसुः श्रुतिमस्तकानि श्रीव्यासचित्तकमलं विकचीबभूव ॥

सर्वाभिराशाभिरलं प्रसेदे वातैरभाव्यद्भुतदिव्यगन्धैः ।
प्रजज्वलेऽपि ज्वलनैस्तदानीं प्रदक्षिणीभूतविचित्रकीलैः ॥ ७६ ॥

सुमनोहरगन्धिनी सतां सुमनोवृद्धिमला शिवङ्करी ।
सुमनोनिकरप्रचोदिता सुमनोवृष्टिरभूत्तदाऽद्भुतम् ॥ ७७ ॥

लोकत्रयी लोकदृशेव भास्वता महीधरेणेव मही सुमेरुणा ।
विद्या विनीतेव सती सुतेन सा रराज तत्राद्भुतराजतेजसा ॥७८॥

सत्कारपूर्वमभियुक्तमुहूर्तवेदिविप्राः शशंसुरभिवीक्ष्य सुतस्य जन्म ।
सर्वज्ञ एष भविता रचयिष्यते च शास्त्रं स्वतन्त्रमथ वादिनृपांश्च जेता ॥

कीर्तिं स्वकां भुवि विधास्यति यावदेषा
किं बोधितेन बहुना शिशुरेष पूर्णः ।
नापृच्छि जीवितमनेन च तैर्न चोक्तं
प्रायो विदन्नपि न वक्त्यशुभं शुभज्ञः ॥ ८० ॥

तज्ज्ञातिबन्धुसुहृदिष्टजनाङ्गनास्तास्तं सूतिकागृहनिविष्टमथो निदध्युः ।
सोपायनास्तमभिवीक्ष्य यथा निदाघे चन्द्रं मुदं ययुरतीव सरोजवक्त्रम् ॥

तत्सूतिकागृहमवेक्षत न प्रदीपं तत्तेजसा यदवभातमभूत् क्षपायाम् ।
आश्चर्यमेतदजनिष्ट समस्तजन्तोस्तन्मन्दिरं वितिमिरं यदभूददीपम् ॥

यत्नस्मृतो शिशुरसौ कुरुते शमग्र्यं
तेनाकृतास्य जनकः किल शङ्कराख्याम् ।
यद्वा चिराय किल शङ्करसंप्रसादा-
ज्जातस्ततो व्यधित शङ्करनामधेयम् ॥ ८३ ॥

सर्वं विदन्सकलशक्तियुतोऽपि बालो
मानुष्यजातिमनुसृत्य चचार तद्वत् ।
बालः शनैर्हसितुमारभत क्रमेण
सर्प्तुं शशाक गमनाय पदाम्बुजाभ्याम् ॥ ८४ ॥

बालेऽथ मञ्चे किल शायितेऽस्मिन्मतां प्रसन्नं हृदयं बभूव ।
संवीक्षमाणे मणिगुच्छमये विद्वन्मुखं हन्त विनीलमासीत् ॥ ८५ ॥

सन्ताडयन् हन्त शनैः पदाभ्यां पर्यङ्कवर्यं कमनीयशय्यम् ।
बिभेद सद्यः शतधा समूहान्विभेदवादीन्द्रमनोरथानाम् ॥ ८६ ॥

द्वित्राणि वर्णानि वदत्ययुष्मिन्द्वैतप्रवीरा दधुरेव मौनम् ।
मुदा चलत्यङ्घ्रिसरोरुहाभ्यां दिशः पलायन्त दशापि सद्यः ॥

उदचारयदर्भको गिरः पदचारानतनोदनन्तरम् ।
विकलोऽभवदादिमात्रयोः पिकलोकश्चरमान्मरालकः ॥ ८८ ॥

नवविद्रुमपल्लवास्तृतामिव काश्मीरपरागपाटलाम् ।
स्थपयन्धरां पदत्विषा स चचारेन्दुनिभः शनैः शनैः ॥ ८९ ॥

मूर्धनि हिमकरचिह्नं निटिले नयनाङ्कमंसयोः शूलम् ।
वपुषि स्फटिकसवर्णं साक्षात्तं मेनिरे शंभुम् ॥ ९० ॥

राज्यश्रीरिव नयकोविदस्य राज्ञो विद्येव व्यसनदवीयसो बुधस्य ।
शुभ्रांशोश्छविरिव शारदस्य पित्रोः संतोषैः सह ववृधे तदीयमूर्तिः ॥

नागेनोरसि चामरेण चरणे बालेन्दुना फालके
पाण्योश्चक्रगदाधनुर्डमरुकैर्मूर्ध्नि त्रिशूलेन च ।
तत्सादृश्यतमाकलय्य ललितं लेखाकृते लाञ्छितं
चित्रं गात्रममंस्त तत्र जनता नेत्रैर्निमेषोज्झितैः ॥ ९२ ॥

सर्गे प्राथमिके प्रयाति विरतिं मार्गे स्थिते दौर्गते
स्वर्गे दुर्गमतामुपेयुषि भृशं दुर्गेऽपवर्गे सति ।
वर्गे देहभृतां निसर्गमलिने जातोपसर्गेऽखिले
सर्गे विश्वसृजस्तदीयवपुषा मर्गोऽवतीर्णो भुवि ॥

इति श्रीमाधवीये तद्वनतारकथापरः ।
संक्षेपशङ्करजये सर्गः पूर्णो द्वितीयकः ॥

( आदितः श्लोकाः–१९१ )

## ॥ तृतीयः सर्गः ॥

( देवावतारः )

इति बालमृगाङ्कशेखरे सति बाल्यमुपागते ततः ।
दिविषत्प्रवराः प्रजज्ञिरे भुवि षट्शास्त्रविदां सतां कुले ॥ १ ॥

कमलानिलयः कलानिधेर्विमलाख्यादजनिष्ट भूसुरात् ।
भुवि पद्मपदं वदन्ति यं सविपथेन विवादिनां यशः ॥ २ ॥

पवनोऽप्यजनि प्रभाकरात् सनतोन्मीलितकीर्तिमण्डलात् ।
गलहस्तितभेदवाद्यसौ किल हस्तामलकाभिधामधात् ॥ ३ ॥

पवमानदशांशतोऽजनि प्लवनानाऽस्वति यद्यशोम्बुधौ ।
धरणी मथिता विवादिवाक्तरणी येन स तोटकाह्वयः ॥ ४ ॥

उदभावि शिलादसूनुना मदयद्वादिकदम्बनिग्रहैः ।
समुदञ्चितकीर्तिशालिनं यमुदङ्कं ब्रुवते महीतले ॥ ५ ॥

विधिरास सुरेश्वरो गिरां निधिरानन्दगिरिर्व्यजायत ।
अरुणः समभूत् सनन्दनो वरुणोऽजायत चित्सुखाह्वयः ॥ ६ ॥

अपरेऽप्यमरान्दिवौकसः स्वपरेर्ष्यापरविद्विषः प्रभोः ।
चरणं परिचरितुं जगच्छरणं भूसुरपुङ्गवात्मजाः ॥ ७ ॥

चार्वाकदर्शनविधानसरोषधातृ-
शापेन गीष्पतिरभूद्भुवि मण्डनाख्यः ।
नन्दीश्वरः करुणयेश्वरचोदितः सन्
आनन्दगिर्यभिधया व्यजनीति केचित् ॥ ८ ॥

अथावतीर्णस्य विधेः पुरन्ध्री साऽभूद्यदाख्योभयभारतीति ।
सरस्वती सा खलु वस्तुवृत्त्या लोकोऽपि तां वक्ति सरस्वतीति ॥ ९ ॥

पुरा किलाध्यैपत धातुरन्तिके सर्वज्ञकल्पा मुनयो निजं निजम् ।
वेदं तदा दुर्वसनोऽतिकोपनो वेदानधीयन् क्वचिदस्खलत्स्वरे ॥ १० ॥

तदा जहासेन्दुमुखी सरस्वती यदङ्गमर्णोद्भव-शब्दसन्ततिः ।
चुकोप तस्यै दहनानुकारिणा निरीक्षताक्ष्णा मुनिरुग्रशासनः ॥ ११ ॥

शशाप तां दुर्विनयेऽवनीतले जायस्व मर्त्येष्वविभेत्सरस्वती ।
प्रसादयामास निसर्गकोपनं तत्पादमूले पतिता विषादिनी ॥ १२ ॥

दृष्ट्वा विषण्णां मुनयः सरस्वतीं प्रसादयाञ्चक्रुरिमं तमादरात् ।
कृतापराधां भगवन् क्षमस्व तां पितेव पुत्रं विहितागसं मुने ॥ १३ ॥

प्रसादितोऽभूदथ सम्प्रसन्नो वाण्या मुनीन्द्रैरपि शापमोक्षम् ।
ददौ यदा मानुषशङ्करस्य संदर्शने स्याद्भवितासमर्त्या ॥ १४ ॥

सा शोणतीरेऽजनि विप्रकन्या सर्वार्थवित् सर्वगुणोपपन्ना ।
यस्या बभूवुः सहजाश्च विद्याः शिरोगतं के परिहर्तुमीशाः ॥ १५ ॥

सर्वाणि शास्त्राणि षडङ्गवेदान् काव्यादिकान् वेत्ति परं च सर्वम् ।
तन्नास्ति नो वेत्ति यदत्र बाला तस्मादभूच्चित्रपदं जनानाम् ॥ १६ ॥

सा विश्वरूपं गुणिनं गुणज्ञा मनोऽभिरामं द्विजपुङ्गवेभ्यः ।
शुश्राव तां चापि स विश्वरूपस्तस्मात् तयोर्दर्शनलालसाऽभूत् ॥ १७ ॥

अन्योन्यसंदर्शनलालसौ तौ चिन्ताप्रकर्षादधिगम्य निद्राम् ।
अवाप्य संदर्शनमापणानि पुनः प्रबुद्धौ विरहामितप्तौ ॥ १८ ॥

दिदृक्षमाणावपि नेक्षमाणावन्योन्यवार्ताहृतमानसौ तौ ।
यथोचिताहारविहारहीनौ तनौ तनुत्वं स्मरणादुपेतौ ॥ १९ ॥

दृष्ट्वा तदीयौ पितरौ कदाचिदपृच्छतां तौ परिकर्शिताङ्गौ ।
वपुः कृशं ते मनसोऽप्यगर्वो न व्याधिमीक्षे न च हेतुमन्यम् ॥ २० ॥

इष्टस्य हानेरनभीष्टयोगाद्भवन्ति दुःखानि शरीरभाजाम् ।
वीक्षे न तौ द्वावपि वीक्षमाणो विना निदानं नहि कार्यजन्म ॥ २१ ॥

न तेऽत्यगाद्द्वहनस्य कालः परावमानो न च निःस्वता वा ।
कुटुम्बभारो मयि दुःसहोऽयं कुमारवृत्तेस्तव काऽत्र पीडा ॥ २२ ॥

न मूढभावः परितापहेतुः पराजितिर्वा तत्र तन्निदानम् ।
विद्वत्सु विस्पष्टतयाऽग्रपाठात् सुदुर्गमार्थादपि तर्कविद्भिः ॥ २३ ॥

आ जन्मनो विहितकर्मनिषेवणं ते स्वप्नेऽपि नास्ति विहितेतरकर्मसेवा ।
तस्मान्न मेयमपि नारकयातनाभ्यः किं ते मुखं प्रतिदिनं गतशोभमास्ते ॥

निर्बन्धतो बहुदिनं प्रतिपाद्यमानौ
वक्तुं कृपाभरयुतावित्यूचतुः स ।
निर्बन्धतस्तव वदामि मनोगतं मे
वाच्यं न वाच्यमिति यद्वितनोति लज्जाम् ॥ २५ ॥

शोणाख्यपुंनदतटे वसतो द्विजस्य कन्या श्रुतिं गतवती द्विजपुङ्गवेभ्यः ।
सर्वज्ञतापदमनुत्तमरूपवेषां तामुद्विवक्षति मनो भगवन् मदीयम् ॥

पुत्रेण सोऽतिविनयं गदितोऽन्वयाद् द्वौ
विप्रौ वधूवरणकर्मणि संप्रवीणौ ।

तावापतुर्द्विजगृहं द्विजसंदिदृक्षू
देशानतीत्य बहुलान्निजकार्यसिद्ध्यै ॥ २७ ॥

भूभृन्निकेतनगतः श्रुतविश्वशास्त्रः
श्रीविश्वरूप इति यः प्रथितः पृथिव्याम् ।
तत्पादपद्मरजसे स्पृहयामि नित्यं
साहाय्यमत्र यदि तात भवान् विदध्यात् ॥ २८ ॥

पुत्र्या वचः पिबति कर्णपुटेन ताते श्रीविश्वरूपगुरुणा गुरुणा द्विजानाम् ।
आजग्मतुः सुवसनौ विशदामयष्टी संप्रेषितौ सुतवरोद्वहनक्रियायै ॥

तावार्च्य स द्विजवरौ विहितोपचारैरायानकारणमथो शनकैरपृच्छत् ।
श्रीविश्वरूपगुरुवाक्यत आगतौ स्व इत्यूचतुर्वरणकर्मणि कन्यकायाः ॥

संप्रेषितौ श्रुतवयःकुलवृत्तधर्मैः साधारणीं श्रुतवता स्वसुतस्य तेन ।
याचावहे तव सुतां द्विज तस्य हेतोरन्योन्यसङ्घटनमेतु मणिद्वयं तत् ॥

मध्ये तदुक्तमभिरोचत एव विप्रौ
पृष्ट्वा वधूं मम पुनः करवाणि नित्यम् ।
कन्याप्रदानमिदमायतते वधूषु
नो चेदमूर्व्यसनसक्तिषु पीडयेयुः ॥ ३२ ॥

भार्यामपृच्छदथ किं करवाव भद्रे
विप्रौ वरीतुमनसौ खलु राजगेहात् ।
एतां सुतां सुतनिभा तव याऽस्ति कन्या
पुनर्न वाच्यम् ॥ ३३ ॥

दूरे

वित्तान्विताय कुलवृत्तसमन्विताय
देया सुतेति विदितं श्रुतिलोकयोश्च ॥ ३४ ॥

नैवं नियन्तुमनघे तव शक्यमेतत्
तां रुक्मिणीं यदुकुलाय कुशस्थलीशे ।
प्रादात् स भीष्मकनृपः खलु कुण्डिनेश-
स्तीर्थापदेशमटते स्वपरीक्षिताय ॥ ३५ ॥

किं केन सङ्गतमिदं सति मा विचारी-
र्यो वैदिकीं सरणिमग्रहतां प्रयत्नात् ।
प्रातिष्ठिपत् सुगतदुर्जयनिर्जयेन
शिष्यं यमेनमशिषत् स च भट्टपादः ॥ ३६ ॥

किं वर्ण्यते सुदति यो भविता वरो नो
विद्याधनं द्विजवरस्य न बाह्यवित्तम् ।
याऽन्वेति सन्ततमनन्तदिगन्तभाजं
यां राजचोरवनिता न च हर्तुमीशाः ॥ ३७ ॥

वर्ध्यर्जनावनपरिव्ययगानि तानि
वित्तानि चित्तमनिशं परिखेदयन्ति ।
चोरान्नृपात्स्वजनतश्च भयं धनानां
शर्मेति जातु न गुणः खलु बालिशस्य ॥ ३८ ॥

केचिद्धनं निदधते भुवि नोपभोगं
कुर्वन्ति लोभवशगा न विदन्ति केचित् ।
अन्येन गोपितमथान्यजना हरन्ति
तद्गेहदीपपरिसरे जरमेव दृष्टं ॥ ३९ ॥

सर्वात्मना दुहितरो न गृहे विधेया-
स्ताश्चेत्पुरा परिणयाद्रज उद्गतं स्यात् ।
पश्येयुरात्मपितरौ बत पातयन्ति
दुःखेषु घोरनरकेष्विति धर्मशास्त्रम् ॥ ४० ॥

मा भूदयं तव मया कलहः कुमारीं
पृच्छाव सा वदति यं भविता वरोऽस्याः ।
एवं विधाय समयं पितरौ कुमार्याः
अभ्याशमीयतुरितो गदितेष्टकार्यौ ॥ ४१ ॥

श्रीविश्वरूपगुरुणा प्रहितौ द्विजाती
कन्यार्थिनौ सुतनु किं करवाव वाच्यम् ।
तस्याः प्रमोदनिचयो न ममौ शरीरे
रोमाञ्चपूरमिषतो बहिरुज्जगाम ॥ ४२ ॥

तेनैव सा प्रतिवचः प्रददौ पितृभ्यां तेनैव तावपि तयोर्युगलाय सत्यम् ।
आदाय विप्रमपरं पितृगेहतोऽस्यास्तौ जग्मतुर्द्विजवरौ स्वनिकेतनाय ॥

अस्माच्चतुर्दशदिने भविता दशम्यां
जामित्रमादिशुभयोगयुतो मुहूर्तः ।
एवं विलिख्य गणितादिषु कौशलाढ्या
व्याख्यापराय दिशति स्म सरस्वती सा ॥ ४४ ॥

तौ हृष्टपुष्टमनसौ विहितेष्टकार्यौ
श्रीविश्वरूपगुरुमुत्तममैक्षिषाताम् ।
सिद्धं समीहितमिति प्रथितानुभावो
दृष्ट्वैव तन्मुखमसावथ निश्चिकाय ॥ ४५ ॥

अन्यः स्वहस्तगतपत्रमदात्स पत्रं दृष्ट्वा जहास सुखवारिनिधौ ममज्ज ।
विप्रान्यथोचितमपूजयदागतांस्ताञ्जत्वांशुकादिभिरयं बहुवित्तलभ्यैः ॥

पित्रानुशिष्टवसुधासुरशंसितेन
विज्ञापितः सुखमवाप स विश्वरूपः ।
कार्याण्यथाऽऽह पृथगात्मजनात् समेतान्
बन्धुप्रियः परिणयोचितसाधनाय ॥ ४७ ॥

मौहूर्तिकैर्बहुभिरेत्य मुहूर्तकाले संदर्शिते द्विजवरैर्बहुविद्भिरिष्टैः ।
माङ्गल्यवस्तुसहितोऽखिलभूषणाढ्यः स प्रापदक्षततनुः पृथुशोणतीरम् ॥

शोणस्य तीरमुपयातमुपाशृणोत् स जामातरं बहुविधं किल विष्णुमित्रः ।
प्रत्युज्जगाम मुमुदे प्रियदर्शनेन प्रावीविशद् गृहममुं बहुवाद्यघोषैः ॥

दत्वाऽऽसनं मृदुवचः समुदीर्य तस्मै पाद्यं ददौ समधुपर्कमनर्घपात्रे ।
अर्घ्यं ददावहमियं तनया गृहास्ते गावो हिरण्यमखिलं भवदीयमूचे ॥

अस्माकमद्य पवितं कुलमाद्यनाः स्मः संदर्शनं परिणयव्यपदेशतोऽभूत् ।
नोचेद्भवान्बहुविदग्रसरः क चाहं भद्रेण भद्रमुपयाति पुमान्विपाकात् ॥

यद्यद्गृहेऽत्र भगवन्निह रोचते ते तत्तन्निवेद्यमखिलं भवदीयमेतत् ।
वक्ष्यामि सर्वमभिलापपदं त्वदीयं युक्तं हि सन्ततमुपासितवृद्धपुंगे ॥

एवं मिथः परिनिगद्य विशेषमृद्ध्या वाचा युतौ मुदमवापतुरुच्चमौ तौ ।
अन्ये च संमुमुदिरे प्रियसत्कथाभिः स्वेच्छाविहारहसनैरुभये विधेयाः ॥

कन्यावरौ प्रकृतिसिद्धसुरूपवेषौ दृष्ट्वोभयेऽपि परिकर्म विलम्बमानाः ।
चक्रुर्विधेयमिति कर्तुमनीश्वरास्ते शोभाविशेषमपि मङ्गलवासरेऽस्मिन् ॥

एतत्प्रमाप्रतिहतात्मविभूतिभावादाकल्पजातमपि नातिशयं वितेने ।
लोकप्रसिद्धिमनुसृत्य विधेयबुद्ध्या भूषां व्यधुस्तदुभये न विशेषबुद्ध्या ॥

मौहूर्तिका बहुविदोऽपि मुहूर्तकालमप्राक्षुरक्षतधियं खिलवीं सखीभिः ।
पश्चात्तदुक्तशुभयोगयुते शुभांशे मौहूर्तिकाः स्वमतितो जगृहुर्मुहूर्तम् ॥

जग्राह पाणिकमलं हिममित्रधनुः श्रीविष्णुमित्रदुहितुः करपल्लवेन ।
भेरीमृदङ्गपटहाध्ययनाब्जघोषैर्दिङ्मण्डले सुपरिमूर्च्छति दिव्यकाले ॥

यं यं पदार्थमभिकामयते पुमान्यस्तं तं प्रदाय समतूतुषतां तदीड्यौ ।
देवद्रुमाविव महासुमनस्त्वयुक्तौ संभूषितौ सदसि चेरतुरारमलाभौ ॥

आधाय वह्निमथ तत्र जुहाव सम्यक्
गृह्योक्तमार्गमनुसृत्य स विश्वरूपः ।
लाजाञ्जुहाव च वधूः परिजिघ्रति स्म
धूमं प्रदक्षिणमथाकृत सोऽपि चाग्निम् ॥ ५९ ॥

होमावसानपरितोषितविप्रवर्यः प्रस्थापिताखिलसमागतबन्धुवर्गः ।
संरक्ष्य वह्निमनया सममग्निगेहे दीक्षाधरो दिनचतुष्कमुवास हृष्टः ॥

प्रतिष्ठमाने दयिते वरेऽस्मिन्नुपेत्य मातापितरौ वरायाः ।
आभाषिषातां शृणु सावधानो बालेव बाला न तु वेत्ति किञ्चित् ॥

बालैरियं क्रीडति कन्दुकाद्यैर्जातक्षुधा गेहमुपैति दुःखात् ।
एकेति बाला गृहकर्म नोक्ता संरक्षणीया निजपुत्रितुल्या ॥ ६२ ॥

बालेयमङ्ग वचनैर्मृदुभिर्विधेया कार्या न रूक्षवचनैर्न करोति रुष्टा ।
केचिन्मृदूक्तिवशगा विपरीतभावाः केचिद्विहातुमनलं प्रकृतिं जनो हि ॥

कश्चिद्द्विजातिरधिगम्य कदाचिदेनामुद्वीक्ष्य लक्षणमवोचदनिन्दितात्मा ।
मानुष्यमात्रजननं निजदेवमावेत्त्यस्माच्च यो वचनमुग्रमयोज्यमस्याम् ॥

सर्वज्ञनालक्षणमस्ति पूर्णमेषा कदाचिद्वदतोः कथायाम् ।
तत्साक्षिमात्रं त्वजिताऽन्वयधा संदिश्य नावेवमसौ जगाम ॥ ६५ ॥

श्वश्रूर्ननान्दा वचनेन वाच्या स्नुषाभिरक्षाऽप्यतते हि तस्याम् ।
निक्षेपभूता तव सुन्दरीयं कार्या गृहे कर्म शनैः शनैस्ते ॥ ६६ ॥

बाल्येषु बाल्यात् सुलभोऽपराधः स नेक्षणीयो गृहिणीजनेन ।
वयं सुवीभूय हि सर्व एव पश्चाद्गुरुत्वं शनकैः प्रयाताः ॥ ६७ ॥

इष्टाऽभिधातुमनलं च मनोऽस्मदीयं
गेहाभिरक्षणविधौ न हि दृश्यतेऽन्यः ।
इष्टाऽभिधानफलमेव यथा भवेन्नौ
ब्रूयात्तथेष्टजनता जननीं वरस्य ॥ ६८ ॥

वत्से त्वमद्य गमिताऽसि दशामपूर्वां तद्रक्षणे निपुणधीरिव सुष्ठु नित्यम् ।
कुर्यान्न बालविहृतिं जनतोपहास्यां सा नातिचापरमियं परितोषयेच्च ॥

पाणिग्रहात्त्वाधिपती समीरितौ पुरा कुमार्याः पितरौ ततः परम् ।
पतिस्त्वमेकं शरणं व्रजानिशं लोकद्वयं जेष्यसि येन दुर्जयम् ॥ ७० ॥

पत्यावभुक्तवति सुन्दरि मा स्म भुङ्क्ष्व
याते प्रयातमपि मा स्म भवेद्विभूषा ।
पूर्वापरादिनियमोऽस्ति निमज्जनादौ
वृद्धाङ्गनाचरितमेव परं प्रमाणम् ॥ ७१ ॥

रुष्टे धवे सति रुषेह न वाच्यमेकं
क्षन्तव्यमेव सकलं स तु शाम्यतीत्यम् ।
तस्मिन् प्रसन्नवदने चकितेव वत्से
सिध्यत्यभीष्टमनघे क्षमयैव सर्वम् ॥ ७२ ॥

भर्तुः समक्षमपि तद्वदनं समीक्ष्य
वाच्यो न जातु सुभगे परपूरुषस्ते ।

किं वाच्य एव रहसीति तवोपदेशः
शङ्का वधूपुरुषयोः क्षपयेद्धि हार्दम् ॥ ७३ ॥

आयाति भर्तरि तु पुत्रि विहाय कार्यम्
उत्थाय शीघ्रमुदकेन पदावनेकः ।
कार्यो यथाभिरुचि हे सति जीवनं वा
नोपेक्षणीयमणुमात्रमपीह कं ते ॥ ७४ ॥

धवे परोक्षेऽपि कदाचिदेयुर्गृहं तदीया अपि वा महान्तः ।
ते पूजनीया बहुमानपूर्वं नो चेन्निराशाः कुलदाहकाः स्युः ॥ ७५ ॥

पित्रोरिव श्वशुरयोरनुवर्तितव्यं तद्वन्मृगाक्षि सहजेष्वपि देवरेषु ।
ते स्नेहिनो हि कुपिता इतरेतरस्य योगं विभिद्युरिति मे मनसि प्रतर्कः ॥

हितोपदेशे विनिविष्टमानसौ वधूवरौ राजगृहं समीयतुः ।
लब्धानुमानौ गुरुबन्धुवर्गतो बभूव संक्षोभयभारतीति ॥ ७७ ॥

सा भारती दुर्वसनेन दत्तं पुनः प्रसन्नेन पुराऽऽत्तहर्षा ।
शापावधिं संसदि वर्त्स्यते यत् सर्वज्ञतानिर्वहणाय साक्ष्यम् ॥ ७८ ॥

स भारतीसाक्षिकसर्वविच्चोऽप्यात्मीयधन्यत्वा शिशुवद्विभातः ।
स्वशैशवस्योचितमन्वकांक्षीत् स केशवो यद्वदुदारवृत्तः ॥ ७९ ॥

शैशवे स्थितवता चपलाशे शार्ङ्गिणेव वटवृक्षपलाशे ।
आत्मनीदमखिलं विलुलोके भावि भूतमपि यत्खलु लोके ॥ ८० ॥

तं ददर्श जनताऽद्भुतबालं लीलयाऽधिगतनूतनदोलम् ।
वासुदेवमिव वामनलीलं लोचनैरनिमिषैरनुवेलम् ॥ ८१ ॥

कोमलेन नवनीरदराजिश्यामलेन नितरां समराजि ।
केशवेशवमसाऽधिकमस्य केशवेशचतुराख्यसमस्य ॥ ८२ ॥

शाक्यैः पाशुपतैरपि क्षपणकैः कापालिकैर्वैष्णवै-
रप्यन्यैरखिलैः खलैः खलु खिलं दुर्वादिभिर्वैदिकम् ।
पन्थानं परिरक्षितुं क्षितितलं प्राप्तः परिक्रीडते
घोरे संसृतिकानने विचरतां भद्रङ्करः शङ्करः ॥ ८३ ॥

इति श्रीमाधवीये तत्तद्देवावतारार्थकः ।
संक्षेपशङ्करजये तृतीयः सर्ग आभवत् ॥

( आदितः श्लोकाः –२७४ )

## ॥ चतुर्थः सर्गः ॥

### ( कौमारचरितवर्णनम् )

अथ शिवो मनुजो निजमायया द्विजगृहे द्विजमोदमुपावहन् ।
प्रथमहायन एव समग्रहीत्सकलवर्णमसौ निजभाषिकाम् ॥ १ ॥

द्विसन एव शिशुर्लिखिताक्षरं गदितुमक्षमताक्षरवित् सुधीः ।
अथ स काव्यपुराणमुपाशृणोत् स्वयमवैक्षिमपि श्रवणं विना ॥ २ ॥

अजनि दुःखकरो न गुरोरसौ श्रवणतः सकृदेव परिग्रही ।
सहनिपाठजनस्य गुरुः स्वयं स च पपाठ ततो गुरुणा विना ॥ ३ ॥

रजसा तमसाऽप्यनाश्रितो रजसा खेलनकाल एव हि ।
स कलाधरसच्चमात्मजः सकलाश्चापि लिपीरविन्दत ॥ ४ ॥

सुधियोऽस्य विदिद्युतेऽधिकं विधिवच्चौलविधानसंस्कृतम् ।
ललितं करणं घृताहुतिज्वलितं तेज इवाऽऽशुशुक्षणेः ॥ ५ ॥

उपपादननिर्व्यपेक्षधीः स पपाठाहृतिपूर्वकागमान् ।
अधिकाव्यमरंस्त कर्कशेऽप्यधिकोऽस्तर्कनयेऽप्यनर्तत ॥ ६ ॥

हरतस्त्रिदशेज्यचातुरीं पुरतस्तस्य न वक्तुमीश्वराः ।
प्रभवोऽपि कथासु नैजवाग्विभवोत्सारितवादिनो बुधाः ॥ ७ ॥

अमुकक्रमिकोक्तिधोरणीमुरगाधीशकथावधीरिणीम् ।
मुमुहुर्निशमय्य वादिनः प्रतिवाक्योपहृतौ प्रमादिनः ॥ ८ ॥

कुमतानि च तेन कानि नोन्मथितानि प्रथितेन धीमता ।
स्वमतान्यपि तेन खण्डितान्यतियत्नैरपि साधितानि कैः ॥ ९ ॥

अमुना तनयेन भूषितं यमुनातातसमानवर्चसा ।
तुलया रहितं निजं कुलं कलयामास स पुत्रिणां वरः ॥ १० ॥

शिवगुरुः स जरंस्त्रिसमे शिशावमृत कर्मवशः सुतमोदितः ।
उपनिनीषितसूनुरपि स्वयं न हि यमोऽस्य कृताकृतमीक्षते ॥ ११ ॥

इह भवेत् सुलभं न सुतेक्षणं न सुतरां सुलभं विभवेक्षणम् ।
सुतमवाप कथञ्चिदयं द्विजो न खलु वीक्षितुमैष्ट सुतोदयम् ॥ १२ ॥

मृतमदीदहदात्मसनाभिभिः पितरमस्य शिशोर्जननी ततः ।
समनुनीतवती धवखण्डितां स्वजनता मृतिशोकहरैः पदैः ॥ १३ ॥

कृतवती मृतचोदितमक्षमा निजजनैरपि कारितवत्यसौ ।
उपनिनीषुरभूत् सुतमात्मनः परिसमाप्य च वत्सरदीक्षणम् ॥ १४ ॥

उपनयं किल पञ्चमवत्सरे प्रवरयोगयुते सुमुहूर्तके ।
द्विजवधूर्नियता जननी शिशोर्व्यधित तुष्टमनाः सह बन्धुभिः ॥ १५ ॥

अधिजगे निगमांश्चतुरोऽपि स क्रमत एव गुरोः सषडङ्गकान् ।
अजनि विस्मितमत्र महामतौ द्विजसुतेऽल्पतनौ जनतामनः ॥ १६ ॥

सहनिपाठयुता वटवः समं पठितुमैशत न द्विजसूनुना ।
अपि गुरुर्विशयं प्रतिपेदिवान् क इव पाठयितुं सहसा क्षमः ॥ १७ ॥

अत्र किं स यदशिक्षत सर्वांश्चित्रमागमगणाननुवृत्तः ।
द्वित्रिमासपठनादभवद्यस्तत्र तत्र गुरुणा समवियः ॥ १८ ॥

वेदे ब्रह्मसमस्तदङ्गनिचये गार्ग्योपमस्तत्कथा-
तात्पर्यार्थविवेचने गुरुसमस्तत्कर्मसंवर्णने ।
आसीज्जैमिनिरेव तद्वचनजप्रोद्बोधकन्दे समो
व्यासेनैव स मूर्तिमानिव नवो वाणीविलासैर्वृतः ॥ १९ ॥

आन्वीक्षिक्यैक्षि तन्त्रे परिचितिरतुला कापिले काऽपि लेभे
पीतं पातञ्जलाम्भः परमपि विदितं भाट्टघट्टार्थतत्त्वम् ।
यत्तः सौख्यं तदस्यान्तरभवदमलाद्वैतविद्यासुखेऽस्मिन्
कूपे योऽर्थः स तीर्थे सुपयसि विततें हन्त नान्तर्भवेत् किम् ॥

स हि जातु गुरोः कुले वसन् सवयोभिः सह भैक्षलिप्सया ।
भगवान् भवनं द्विजन्मनो धनहीनस्य विवेश कस्यचित् ।२१॥

तमवोचत तत्र सादरं बटुवर्यं गृहिणः कुटुम्बिनी ।
कृतिनो हि भवादृशेषु ये वरिवस्यां प्रतिपादयन्ति ते ॥ २२ ॥

विधिना खलु वञ्चिता वयं वितरीतुं बटवे न शक्नुमः ।
अपि भैक्षमकिञ्चनत्वतो धिगिदं जन्म निरर्थकं गतम् ॥ २३ ॥

इति दीनमुदीरयन्त्यसौ प्रददावामलकं यतीन्दवे ।
करुणं वचनं निशम्य सोऽप्यभवज्ज्ञाननिधिर्दयार्द्रधीः ॥ २४ ॥

स मुनिर्मुरभित्कुटुम्बिनीं पदचित्रैर्नवनीतकोमलैः ।
मधुरैरतनिष्टवांस्तवैर्द्विजदारिद्र्यदशानिवृत्तये ॥ २५ ॥

अथ कैटभजित्कुटुम्बिनी तटिदुद्दामनिजाङ्गकान्तिभिः ।
सकलाश्च दिशः प्रकाशयन्त्यचिरादाविरभूत् तदग्रतः ॥ २६ ॥

अभिवन्द्य सुरेन्द्रवन्दितं पदयुग्मं पुरतः कृताञ्जलिम् ।
ललितस्तुतिभिः प्रहर्षिता तमुवाच स्मितपूर्वकं वचः ॥ २७ ॥

विदितं तव वत्स हृद्गतं कृतमेभिर्न पुराभवे शुभम् ।
अधुना मदपाङ्गपात्रतां कथमेते महितामवाप्नुयुः ॥ २८ ॥

इति तद्वचनं स शुश्रुवान्निजगादाम्ब मयीदमर्पितम् ।
फलमद्य ददस्व तत्फलं दयनीयो यदि तेऽहमिन्दिरे ॥ २९ ॥

अमुना वचनेन तोषिता कमला तद्भवनं समन्ततः ।
कनकामलकैरपूरयज्जनताया हृदयं च विस्मयैः ॥ ३० ॥

अथ चक्रभृतो वधूमये सुकृतेऽन्तर्धिमुपागते सति ।
प्रशशंसुरतीव शङ्करं महिमानं तमवेक्ष्य विस्मिताः ॥ ३१ ॥

दिवि कल्पतरुर्यथा तथा भुवि कल्याणगुणो हि शङ्करः ।
सुरभूसुरयोरपि प्रियः समभूदिष्टविशिष्टवस्तुदः ॥ ३२ ॥

अमरस्पृहणीयसंपदं द्विजवर्यस्य निवेशमात्मवान् ।
स विधाय यथापुरं गुरोः सविधे शास्त्रवराण्यशिक्षत ॥ ३३ ॥

वरमेनमवाप्य भेजिरे परभागं सकलाः कला अपि ।
समवाप्य निजोचितं पतिं कमनीया इव वामलोचनाः ॥ ३४ ॥

सरहस्यसमग्रशिक्षिताखिलविद्यस्य यशस्विनो वपुः ।
उपमानकथाप्रसङ्गमप्यसहिष्णु श्रियमन्वपद्यत ॥ ३५ ॥

जयति स्म सरोरुहप्रभामदकुण्ठीकरणक्रियाचणम् ।
द्विजराजकरोपलालितं पदयुग्मं परगर्वहारिणः ॥ ३६ ॥

जलमिन्दुमणिः स्रवेद्यदि यदि पद्मं स्वपदस्थतः सरः ।
यदि तत्र भवेत्कुशेशयं तदमुष्याङ्घ्रितुलामवाप्नुयात् ॥ ३७ ॥

पादौ पद्मसमौ वदन्ति कतिचित् श्रीशङ्करस्यानघौ
वक्त्रं च द्विजराज-मण्डलनिभं नैतद्द्वयं साम्प्रतम् ।
प्रेष्यः पद्मपदः किल त्रिजगति ख्यातः पदं दत्तवान्
अम्भोजे द्विजराजमण्डलशतैः प्रेष्यैरुपास्यं मुखम् ॥ ३८ ॥

मुहुः सन्तो नेजं हृदयकमलं निर्मलतरं
विधातुं योगीन्द्राः पदकमलमस्मिन्निदधति ।
दुरापं शक्राद्यैर्भ्रमति वदनं यत्रवसुधां
ततो मन्ये पद्मात्पदमधिकमिन्दोश्च वदनम् ॥ ३९ ॥

तत्त्वज्ञानफलेग्रहिर्घनतरव्यामोहमुष्टिन्धयो
निःशेषव्यसनोदरंभरिघप्राग्भारकूलङ्कषः ।
लुण्टाको मदमत्सरादिविततेस्तापत्रयारुन्तुदः
पादः स्यादमितंपचः करुणया भद्रङ्करः शाङ्करः ॥ ४० ॥

पादाघातस्फोटव्रणकिणितकालान्तिकभुजं
प्रधानव्याघातप्रणतविमतद्रोहविरुदम् ।
परं ब्रह्मैवासौ भवति तत एवास्य सुपदं
गतापस्मारार्तीञ्जगति महतोऽद्यापि तनुते ॥ ४१ ॥

प्राप्तस्याभ्युदयं नवं कलयतः सारस्वतोज्जृम्भणं
स्वालोकेन विधूनविश्वतिमिरस्याऽऽसन्नतारस्य च ।
तापं नस्त्वरितं क्षिपन्ति घनतापत्रं प्रसन्ना मुने-
राह्लादं च कलाधरस्य मधुराः कुर्वन्ति पादक्रमाः ॥ ४२ ॥

नतिर्दत्ते मुक्तिं नतमुत पदं वेति भगव-
त्सदस्य प्रागल्भ्याज्जगति विवदन्ते श्रुतिविदः ।

यदन्तु भ्रमरस्तद्भजनरतपादाम्बुजरजः-
परीरम्भारम्भः सपदि हृदि निर्वाणशरणम् ॥ ४३ ॥

धवलांशुकपल्लवावृतं विललासोरुयुगं विपश्चितः ।
अमृतार्णवफेनमञ्जरीच्छुरितैरावतहस्तशस्तिभृत् ॥ ४४ ॥

यदि हाटकवल्लरीलयीघटिता स्फाटिककूटभृत्तटी ।
स्फुटमस्य तया कटीतटी तुलिता स्यात् कलितत्रिमेखला ॥

आदाय पुस्तकवपुः श्रुतिसारमेकहस्तेन वादिकृततद्गतकण्टकानाम् ।
उद्धारमारचयतीव विबोधमुद्रामुद्बिभ्रता निजकरेण परेण योगी ॥

सुधीराजः कल्पद्रुमकिसलयाभौ करवरौ
करोत्येतौ चेतस्यमलकमलं यत्र सहचरम् ।
रुचेश्चोरावेनावहनि किमु राज्ञाविति भिया
निशादेराप्रातर्निजदलकवाटं घटयति ॥ ४७ ॥

रुचिरा तदुरःस्थली बभाववरस्फालविशालमां ।
धरणीभ्रमणोदितश्रमात् पृथुशय्येव जयश्रियाऽऽश्रिता ॥ ४८ ॥

परिभ्रथिमापहारिणौ शुशुभाते शुभलक्षणौ भुजौ ।
बहिरन्तरशत्रुनिग्रहे विजयस्तम्भयुगीधुरन्धरौ ॥ ४९ ॥

उपवीतममुष्य दिद्युते विसतन्तुक्रियमाणसौहृदम् ।
शरदिन्दुमयूखपाण्डिमातिशयोल्लङ्घनजाङ्घिकप्रभम् ॥ ५० ॥

समराजत कण्ठकम्बुराड् भगवत्पादमुनेर्यदुद्भवः ।
निनदः प्रतिपक्षनिग्रहे जयशङ्खध्वनितामविन्दत ॥ ५१ ॥

अरुणाधरसंगताऽधिकं शुशुभे तस्य हि दन्तचन्द्रिका ।
नवविद्रुमवल्लरीगता तुहिनांशोरिव शारदी छविः ॥ ५२ ॥

सुकपोलतले यशस्विनः शुशुभाने सितभानुवर्चसः ।
वदनाश्रितभारतीकृते विधिसङ्कल्पितदर्पणाविव ॥ ५३ ॥

समासीत्तस्यास्यं सुकृतजलधेः सर्वजगतां
पयःपारावारादजनि रजनीशो यदुमतात् ।
सुधाधारोद्गारः सुसदृगनयोः किन्तु शशभृत्
सतां तेजःपुञ्जं हरति वदनं तस्य दिशति ॥ ५४ ॥

पुरा क्षीराम्भोधेरहह तनया यद्विपयता-
ज्जुषो दीनस्याग्रे घनकनकधाराः समकिरत् ।
इदं नेत्रं पात्रं कमलनिलयाप्रीतिवितते-
र्मुनीशस्य स्तोतुं कृतसुकृत एव प्रभवति ॥ ५५ ॥

दुर्वारप्रतिपक्षदूषणसमुन्मेषक्षितौ कल्पने
सेतोरप्यनघस्य तापसकुलेणाङ्कस्य लङ्कारयः ।
आपन्नानतिकायविभ्रमभुवः संसारिशाखामृगान्
पुष्णन्त्यच्छपयोब्धिवीचिविदलङ्काराः कटाक्षांकुराः ॥ ५६ ॥

निःशङ्कस्तिरुदकण्टककुलं मीनाङ्कदावानल-
ज्वालासंकुलमार्तिपङ्किलतरं व्यर्थं धृतिध्वंसिनम् ।
संसाराकृतिमामयच्छलचलद्दुर्वारदुर्वारणम्
मुष्णन्ति श्रममाश्रिता नवसुधावृष्ट्यायिता दृष्टयः ॥५७॥

त्रिपुण्ड्रं तस्याहुः सितमसितशोभि लिपयगां
कृपापारावारं कतिचन मुनिं तं श्रितवतीम् ।
वयं त्वेतद् ब्रूमो जगति किल दिसः सुरुचिरा-
स्त्रयीमौलिव्याकृत्युपकृतिमनाः कीर्तय इति ॥ ५८ ॥

असौ शंभोर्लीलावपुरिति भृशं सुन्दर इति
द्वयं संप्रत्येतज्जनमनसि सिद्धं च सुगमम् ।
यदन्तः पश्यन्तः करणमदसीयं निरुपमं
तृणीकुर्वन्त्येते सुषममपि कामं सुमतयः ॥ ५९ ॥

अज्ञानान्तर्गहनपतितानात्मविद्योपदेशै-
स्त्रातुं लोकान्भवदवशिखातापपापच्यमानान् ।
मुक्त्वा मौनं वटविटपिनो मूलतो निष्पतन्ती
शम्भोर्मूर्तिश्चरति भुवने शङ्कराचार्यरूपा ॥ ६० ॥

उच्चण्डाहितवावदूकहननापाण्डित्यवैतण्डिकं
जाते देशिकशेखरे पदजुषां संतापचिन्तापहे ।
कातर्यं हृदि भूयसाकृत पदं वैभाषिकादेः कथा-
चातुर्यं कलुषात्मनो लयमगाद् वैशेषिकादेरपि ॥ ६१ ॥

अमुना क्रतवः प्रसाधिताः क्रतुविध्वंसकरः स शङ्करः ।
इयमेव भिदाऽनयोर्जितसरयोः सर्वविदोर्बुधेड्ययोः ॥ ६२ ॥

कलयाऽपि तुलानुकारिणं कलयामो न वयं जगत्त्रये ।
विदुषां स्वसमो यदि स्वयं भविता नेति वदन्ति तत्र के ॥

भुवनान्त इवामरद्रुमा अमरद्रुष्विव पुष्पसञ्चयाः ।
भ्रमरा इव पुष्पसञ्चयेष्वतिसंख्याः किल शङ्करे गुणाः ॥ ६४ ॥

कामं वस्तुविचारतोऽच्छिनदयं पारुष्यहिंसाक्रुधः
क्षान्त्या दैन्यपरिग्रहानृतकथालोभांस्तु संतोषतः ।
मात्सर्यं स्वनसूयया मदमहामानौ चिरंभावित-
स्वान्योत्कर्षगुणेन तृप्तिगुणतस्तृष्णां पिशाचीमपि ॥ ६५ ॥

कामं यस्तु समूलघातमवधीत् स्वर्गापवर्गापहं
रोषं यः खलु चूर्णपेषमपिषन्निःशेषदोषावहम् ।
लोभादीनपि यः परांस्तृणसमुच्छेदं समुच्चिच्छिदे
स्वस्वान्तेवसतां सतां स भगवत्पादः कथं वर्ण्यते ॥ ६६ ॥

केऽमी कान्त दिवा निशाकरकरा घर्मस्य मर्मच्छिदो
मुग्धे शम्भुनवावतारसुगुरोरेते गुणानां गणाः ।
कस्मादुत्पलसन्ततिर्विकसिता विस्मेरदिग्योपिताम्
एषाऽपाङ्गझरीति दिग्गजवधूप्रश्नोत्तरे रेजतुः ॥ ६७ ॥

नाक्ष्णा माक्षिकमीक्षितं क्षणमपि द्राक्षा मुहुः शिक्षिता
क्षीरेक्षू समुपेक्षितौ भुवि यया सा शङ्करश्रीगुरोः ।
कान्तानन्तदिगन्तलङ्घनकलाजङ्घालतत्तद्गुण-
श्रेणी निर्भरमाधुरीमदधुरा धन्येति मन्यामहे ॥ ६८ ॥

क्षान्तिश्चेद्वसुधा जहातु महतीं सर्वंसहत्वप्रथां
विद्या चेद्विरहन्तु षण्मुखमुखाः स्वाखर्वगर्वावलीम् ।
वैराग्यं यदि बादरायणियशः कार्श्यं परं गाहतां
किं जल्पैर्मुनिशेखरस्य न तुलां कुत्रापि वीक्षामहे ॥ ६९ ॥

या मूर्तिः क्षमया मुनीश्वरमयी गोत्रासगोत्रायते
विद्याभिर्निरवद्यकीर्तिमिरलं भाषाविभाषायते ।
भक्ताभीप्सितकल्पनेन नितरां कल्पादिकल्पायते
कस्तां नान्यपृथग्जनैस्तुलयितुं मन्दाक्षमन्दायते ॥ ७० ॥

न बभूव पुरातनेषु तत्सदृशो नाद्यतनेषु दृश्यते ।
भविता किमनागतेषु वा न सुमेरोः सदृशो यथा गिरिः ॥ ७१ ॥

समशोभत तेन तत्कुलं स च शीलेन परं व्यरोचत ।
अपि शीलमदीपि विद्यया ह्यपि विद्या विनयेन विद्युते ॥ ७२ ॥

सुयशःकुसुमोच्चयः श्रयद्विबुधालिर्गुणपल्लवोद्गमः ।
अवबोधफलः क्षमारसः सुरशाखीव रराज सूरिराट् ॥ ७३ ॥

न च शेषभवी न फाणिती गणिता काणभुजी न गीरपि ।
फणितिष्वितरासु का कथा कविराजो गिरि चातुरीजुषि ॥ ७४ ॥

भट्टभास्करविमर्ददुर्दशामञ्जदागमशिरःकरग्रहाः ।
हन्त शङ्करगुरोर्गिरः क्षरन्त्यक्षरं किमपि तद्रसायनम् ॥ ७५ ॥

जाटाटङ्कजटाकुटीरविहरन्नैलिम्पकल्लोलिनी-
क्षोणीशप्रियकृच्छ्रावतरणावष्टम्भगुम्फच्छिदः ।
गर्जन्तोऽवतरन्ति शङ्करगुरुक्षोणीधरेन्द्रोदराद्
वाणीनिर्झरिणीझराः क्व नु भयं दुर्भिक्षदुर्भिक्षतः ॥ ७६ ॥

वारी चित्तमतङ्गजस्य नगरी बोधात्मनो भूपते-
र्दूरीभूतदुरन्तदुर्मदझरी हारीकृता सूरिभिः ।
चिन्तासन्ततिलूलतातलहरी वेदोल्लसच्चातुरी
संसाराम्बितरीरुदेति भगवत्पादीयवाग्वैखरी ॥ ७७ ॥

कथादर्पोत्सर्पत्कथककुधकण्डूलरसना-
सनालाधःपाते स्वयमुदयमन्तो व्रतिपतेः ।
निगुम्फाः सूक्तीनां निगमशिखराम्भोजसुरभि-
र्जयत्यद्वैतश्रीजयबिरुदघण्टाघणघणाः ॥ ७८ ॥

कस्तूरीघनसारसौरभपरीरम्भप्रियम्भावुकाः
दर्पोन्मेषमुषो निशाकरकराहङ्कारकूलङ्कषाः ।

द्राक्षामाक्षिकशर्करामधुरिमग्रामाविसंवादिनो
व्याहारा मुनिशेखरस्य न कथङ्कारं मुदं कुर्वते ॥ ७९ ॥

अद्वैते परिमुक्तकण्टकपथे कैवल्यघण्टापथे
स्वाहंपूर्वकदुर्विकल्परहितप्राज्ञाध्वनीनाकुले ।
प्रस्कन्दन्मकरन्दबृन्दकुसुमस्तक्षोरणप्रक्रियाम्
आचार्यस्य वितन्वते नवसुधासिक्ताः स्वयं सूक्तयः ॥

दूरोत्सारितदुष्टपांसुपटलीदुर्नीतयोऽनीतयो
याता देशिकराड्वयाः शुभगुणग्रामालया मालयाः ।
मुष्णन्ति श्रमप्रुल्लसत्-परिमलश्रीमेदुरा मे दुरा-
यासस्याऽऽधिहविर्भुजो भवभये धीप्रान्तरे प्रान्तरे ॥ ८१ ॥

नृत्यन्त्या रसनाग्रसीमनि गिरां देव्याः किमङ्घ्रिक्कण-
न्मञ्जीरोर्जितसिञ्जितान्युत नितम्बालम्बिकाञ्चीरवाः ।
किं वल्गत्-करपद्मकङ्कणक्षणत्कारा इति श्रीमतः
शङ्कामङ्कुरयन्ति शङ्करकवेः सद्युक्तयः सूक्तयः ॥ ८२ ॥

वर्षारम्भविजृम्भमाणजलमुग्गम्भीरघोषोपमो
वात्यातूर्णविघूर्णदर्णवपयःकल्लोलदर्पापहः ।
उन्मीलन्नवमल्लिकापरिमलाहन्तानिहन्ता निरा-
तङ्कः शङ्करयोगिदेशिकगिरां गुम्फः समुज्जृम्भते ॥ ८३ ॥

हृद्या पद्यविनाकृता प्रशमिताविद्याऽस्पृशोद्या सुधा-
स्वाद्या माद्यदरातिचोद्यभिदुराऽभेद्या निषद्यायिता ।
विद्यानामनघोद्यमा सुचरिता साद्यापदुद्यापिनी
पद्या मुक्तिपदस्य साऽद्य मुनिराड्नुवादनाद्या रुजः ॥

आयासस्य नवांकुरं घनमनस्तापस्य बीजं निजं
क्लेशानामपि पूर्वरङ्गमलघुप्रस्तावनाडिण्डिमम् ।
दोषाणामनृतस्य कार्मणमसच्चिन्ताततेर्निष्कुटं
देहादौ मुनिशेखरोक्तिरतुलाऽहङ्कारमुत्कृन्तति ॥ ८५ ॥

तथागतपथाहतक्षपणकप्रधालक्षण-
प्रतारणहतानुवर्त्यखिलजीवसञ्जीवनी ।
हरत्यतिदुरत्ययं भवभयं गुरूक्तिर्नृणाम्
अनाधुनिकभारतीजरठशुक्तिमुक्तामणिः ॥ ८६ ॥

झंझामारुतवेल्लितामरधुनीकल्लोलकोलाहल-
प्राग्भारिकमगर्म्यनिर्भरजरीजृम्भद्वचोनिर्झराः ।
त्रैकालीकमतालिधूलिपटलीमर्मच्छिदः सद्गुरो-
रुद्यद्दुर्मतिधर्मदुर्मतिकृताशान्ति निकृन्तन्ति नः ॥

उन्मीलन्नवमल्लिसौरभपरीरम्भप्रियम्भावुकाः
मन्दारद्रुमरन्दवृन्दविलुठन्माधुर्यधुर्या गिरः ।
उद्गीर्णा गुरुणा विचारकरुणावाराकरेणाऽऽदरात्
सचेतो रमयन्ति हन्त मदयन्त्यामोदयन्ति द्रुतम् ॥ ८८ ॥

धारावादिमुखानुभूतिमुनिवाग्धारासुधाराशिषु
क्रीडन्तीतिवचःसु कः पुनरनुक्रीडेत मूढेतरः ।
नित्यं काञ्चनमम्बरं परिदधच्चित्ते विधत्ते मुहुः
कश्चित्कर्परदुष्पटघरजरत्कन्थानुबद्धादरम् ॥ ८९ ॥

श्रवणाद्दक्षमुनिक्षपाकरवचःशिक्षासपक्षाशयः
क्षारं क्षीरमुदीक्षते बुधजनो न क्षौद्रमाकांक्षति ।

रूक्षां क्षेपयति क्षितौ खलु सितां नेक्षुं क्षणं प्रेक्षते
द्राक्षां नापि दिदृक्षते न कदलीं क्षुद्रां जिघृक्षत्यलम् ॥

विक्रीता मधुना निजा मधुरता दत्ता मुदा द्राक्षया
क्षीरैः पात्रधियाऽर्पिता युधि जिताल्लब्धा बलादिक्षुतः ।
न्यस्ता चोरभयेन हन्त सुधया यस्मादतस्तद्गिरां
माधुर्यस्य समृद्धिरद्भुततरा नान्यत्र सा वीक्ष्यते ॥

कर्पूरेण ऋणीकृतं मृगमदेनाधीत्य संपादितं
मल्लीभिश्चिरसेवनादुपगतं क्रीतं तु काश्मीरजैः ।
प्राप्तं चौरतया पटीरतरुणा यत्सौरभं तद्गिराम्
अक्षय्यं महि हस्त तस्य महिमा धन्योऽप्यमन्यादृशः ॥

अप्सां द्रप्सं सुलिप्सं चिरतरमचरं क्षीरमद्राक्षमिक्षुं
साक्षाद्द्राक्षामजस्रं मधुरसमधयं प्रागविन्दं मरन्दम् ।
मोचामाचाममन्यो मधुरिमगरिमा शङ्कराचार्यवाचाम्
आचान्तो हन्त किं तैरलमपि च सुधासारसीसारसीम्ना ॥९३॥

संतप्तानां भवदवथुभिः स्फारकर्पूरवृष्टि-
र्मुक्तायष्टिः प्रकृतिविमला मोक्षलक्ष्मीमृगाक्ष्याः ।
अद्वैतात्मानवधिकसुखासारकासारहंसी
बुद्धेः शुद्ध्यै भवतु भगवत्पाददिव्योक्तिधारा ॥ ९४ ॥

आम्नायान्तालवाला विमलतरसुरेशादिसूक्ताम्बुसिक्ता
कैवल्याशापलाशा विबुधजनमनःशालजालाधिरूढा ।
तत्त्वज्ञानप्रसूना स्फुरदमृतफला सेवनीया द्विजैर्या
सा मे सोमावतंसावतरगुरुवचोवल्लिरस्तु प्रशस्त्यै ॥ ९५ ॥

नृत्यद्भूतेशवल्गन्मुकुटतटरटत्स्वर्धुनीस्पर्धिनीभि-
र्वाग्भिर्निर्भिन्नकूलोच्चलदमृतसरःसारिणीधोरणीभिः ।
उद्वेलद्द्वैतवादिस्वमतपरिणताहंक्रियाहुंक्रियाभि-
र्भाति श्रीशङ्करार्यः सततमुपनिषद्वाहिनीगाहिनीभिः ॥ ९६ ॥

साहङ्कारसुरासुरावलिकराकृष्टभ्रमन्मन्दर-
क्षुब्धक्षीरपयोधिवीचिसचिवैः सूक्तैः सुधावर्षणात् ।
जह्वालैर्भवदावपावकशिखाजालैर्जटालात्मनां
जन्तूनां जलदः कथं स्तुतिगिरां चैदेशिको देशिकः ॥ ९७ ॥

फलशाल्मलिकचाकचिक्षमं क्षणदाधीशगदागदिप्रियम् ।
रजताद्रिद्विजाद्युजिक्रियं चतुरं तस्य यशः स राजते ॥ ९८ ॥

परिशुद्धकथासु निर्जितो यशसा तस्य कृताञ्जनः शशी ।
स्वकलङ्कनिवृत्तयेऽधुनाऽप्युदधौ मज्जति सेवते शिवम् ॥ ९९ ॥

धम्मिल्ले नवमल्लिकाविकुसुमस्वकल्पनाशिल्पिनो
भद्रश्रीरसचित्रचित्रितकृतः कान्ते ललाटान्तरे ।
ताराचल्यनुहारिहारलतिकानिर्माणकर्माणुकाः
कण्ठे दिग्वधूनां मुनीश्वरयशःपूरा नमःपूरकाः ॥ १०० ॥

उत्सङ्गेषु दिगङ्गना निदधते ताराः करार्पिका-
रागाद् द्यौरवलम्ब्य चुम्बति वियद्गङ्गा समालिङ्गति ।
लोकालोकदरी प्रसीदति फणी दीपोऽस्य दधे रतिं
संलोभये गुरुराजकीर्तिशशिनः सौन्दर्यमत्यद्भुतम् ॥ १०१ ॥

संप्राप्ता मुनिनेतुरस्य हरितामन्तेषु सांकाशिनम्
प्रक्षेत्वा पयसः प्रवाहकिरणानालस्य सांहासिनम् ।

कुर्वन्ति प्रथयन्ति दुर्मदसुधावैदग्ध्यसालोपिनं
सम्यग् घ्नन्ति च विश्वजाड्यिकतमःसंघातसंघातिनम् ॥ १०२ ॥

सोत्कण्ठाकुण्ठकण्ठीरवनखरखरक्षुण्णमत्तेभकुम्भ-
प्रत्यग्रोन्मुक्तमुक्तामणिगणसुषमाबद्धदोर्युद्धलीला ।
मन्थाद्रिक्षुब्धदुग्धार्णवनिकटसमुल्लोलकल्लोलमैत्री-
पात्रीभूता प्रभूता जयति यतिपतेः कीर्तिमाला विशाला ॥

लोकालोकदरि प्रसीदसि चिरात् किं शंकरश्रीगुरु-
प्रोद्यत्कीर्तिनिशाकरं प्रियतमं संश्लिष्य संतुष्यसि ।
त्वं चाप्युत्पलिनि प्रहृष्यसि चिरात् कस्तत्र हेतुस्तयो-
रित्थं प्रश्नगिरां परस्परमभूत् स्मेरत्वमेवोत्तरम् ॥ १०४ ॥

दुर्वारखर्वगर्वोद्धतबुधजनतातूलवातूलवेगो
निर्बाधागाधबोधामृतकिरणसमुन्मेषदुग्धाम्बुराशिः ।
निष्प्रत्यूहं प्रसर्पद्भवदवदहनोद्भूतसन्तापमेघो
जागर्ति स्फीतकीर्तिर्जगति यतिपतिः शंकराचार्यवर्यः ॥ १०५ ॥

इतिहासपुराणभारतस्मृतिशास्त्राणि पुनःपुनर्मुदा ।
विबुधः सुबुधो विलोकयन् सकलज्ञत्वपदं प्रपेदिवान् ॥ १०६ ॥

स पुनः पुनरेत्य सादराद्वयशिक्षशान्तिवाक्ततीः ।
समगादुपशान्तिसंभवां सकलज्ञत्वमदेन शुद्धताम् ॥ १०७ ॥

असत्प्रपञ्चश्चतुराननोऽपि सन्नभोगयोगी पुरुषोत्तमोऽपि सन् ।
अनङ्गजेताऽप्यविरूपदर्शनो जयत्यपूर्वो जगदद्वयीगुरुः ॥ १०८ ॥

आलोक्याननपङ्कजेन दधतं वाणीं सरोजासनं
स्ववत्संनिहितक्षमाश्रियममुं विश्वम्भरं पूरुषम् ।

शङ्करस्तदनु शङ्कितचित्तः पङ्कजैर्विगतपङ्कजलार्द्रैः।
वीजयन्नुपगतो गतमोहां तां जनेन सदनं सह निन्ये ॥ ६ ॥

सोऽथ नेतुमनवद्यचरित्रः सद्मनोऽन्तिकमृषीश्वरपुत्रः।
अस्तवीज्जलधिगां कविहृद्यैर्वस्तुतः स्फुरदलंकृतपद्यैः ॥ ७ ॥

ईहितं तव भविष्यति काल्ये यो हितं जगत इच्छसि बाल्ये।
इत्यवाप्य स वरं तटिनीतः सत्यवाक् सदनमाप विनीतः ॥ ८ ॥

प्रातरेव समलोकत लोकः शीतवातहृतशीकरपूतः।
नूतनामिव धुनीं प्रवहन्तीं माधवस्य समया सदनं ताम् ॥ ९ ॥

एवमेनमतिमर्त्यचरित्रं सेवमानजनदैन्यलवित्रम्।
केरलक्षितिपतिर्हि दिदृक्षुः प्राहिणोत् सचिवमादृतभिक्षुः ॥ १० ॥

सोऽप्यतन्द्रितमभीरुपदाभिः प्राप्य तं तदनु सद्विरदाभिः।
उक्तिभिः सरसमञ्जुपदाभिः शक्तिभृत् सममजिज्ञपदाभिः ॥ ११ ॥

यस्य नैव सदृशो भुवि बोद्धा दृश्यते रणशिरस्सु च योद्धा।
तस्य केरलनृपस्य नियोगाद् दृश्यसे मम च सत्कृतियोगात् ॥ १२ ॥

राजिताग्रासनैर्विलसन्तः पूजिताः सदसि यस्य वसन्तः।
पण्डिताः सरसवादकथाभिः खण्डितापरगिरोऽवितथाभिः ॥ १३ ॥

सोऽयमाजिजितसर्वमहीपः स्तूयमानचरणः कुलदीपः।
पादरेणुमवनं भवभाजामादरेण तव विन्दतु राजा ॥ १४ ॥

एष सिन्धुरवरो मदपूर्णो दोषगन्धरहितः प्रवितीर्णः।
अस्तु तेऽद्य रजसा परिपूतं वस्तुनो नृपगृहं शुचिभूतम् ॥ १५ ॥

इत्युदीर्य परिसाधितदौत्यं प्रत्युदीरितसदुक्तिममात्यम्।
प्रत्युदारमृषिभिः परिशस्तं प्रत्युवाच वचनं क्रमशस्तम् ॥ १६ ॥

भैक्षमन्नमजिनं परिधानं रूक्षमेव नियमेन विधानम् ।
कर्म दारवर शास्ति वटूनां शर्मदायिनिगमाप्तिपटूनाम् ॥ १७ ॥

कर्म नैजमपहाय कुभोगैः कुर्महेऽह किमु कुम्भिपुरोगैः ।
इच्छया सुखममात्य यथेतं गच्छ नाथमसकृत्कथयेत्थम् ॥ १८ ॥

प्रत्युत क्षितिभृताऽखिलवर्णा वृत्त्युपाहरणतो विगतर्णाः ।
धर्मवर्त्मनिरता रचनीयाः कर्म वर्ज्यमिति नो वचनीयाः ॥ १९ ॥

इत्यमुष्य वचनादकलङ्कः प्रत्यगात् पुनरमात्यमृगाङ्कः ।
वृत्तमस्य स निशम्य धरापः सत्तमस्य सविधं स्वयमाप ॥ २० ॥

भूसुरार्भकवरैः परिवीतं भासुरोडुपगभस्त्युपवीतम् ।
अच्छजह्नुसुतया विलसन्तं सुच्छविं नगमिव द्रुमवन्तम् ॥ २१ ॥

चर्म कृष्णहरिणस्य दधानं कर्म कृत्स्नमुचितं विदधानम् ।
नूतनाम्बुदनिभाम्बरवन्तं पूतनारिसहजं तुलयन्तम् ॥ २२ ॥

जातरूपरुचिमुञ्जसुधाम्ना छातरूपकटिमद्भुतधाम्ना ।
नाकभूजमिव सत्कविलब्धं पाकपीतलतिकापरिरब्धम् ॥ २३ ॥

सस्मितं मुनिवरस्य कुमारं विस्मितो नरपतिर्बहुवारम् ।
संनिधाय विनतिं वरदानं तं विधातृसदृशं भुवि मेने ॥ २४ ॥

तेन पृष्टकुशलः क्षितिपालः स्वेन सृष्टमथ शास्त्रवकालः ।
हाटकायुतसमर्पणपूर्वं नाटकत्रयमवाचयदपूर्वम् ॥ २५ ॥

तद्रसार्द्रगुणरीतिविशिष्टं भद्रसन्धिरुचिरं सुकवीष्टम् ।
संग्रहेण स निशम्य सुवाचं तं गृहाण वरमित्यमुमूचे ॥ २६ ॥

तां नितान्तहृदयङ्गमसारां गां निशम्य तुलितामृतधाराम् ।
भूपतिः स रचिताञ्जलिबन्धः स्तोपमं सुखमियेष सुसन्धः ॥ २७ ॥

नो हिताय मम हाटकमेदिहि नस्तु गृहवासिजनाय ।
ईहितं तव भविष्यति शीघ्रं याहि पूर्णमनसेत्यवदत् तम् ॥

राजवर्यकुलवृद्धिनिमित्तां व्याजहार रहसि श्रुतिवित्ताम् ।
इष्टिमस्य सकलेष्टविधातुस्तुष्टिमाप हि तया क्षितिनेता ॥

स विशेषविदा सभाजितः कविमुख्येन कलाभृतां वरः ।
अगमत्कृतकृत्यधीर्निजां नगरीमस्य गुणानुदीरयन् ॥ ३० ॥

बहवः श्रुतिपारदृश्वनः कवयोऽप्यपत शङ्कराद्गुरोः ।
महतः सुमहान्ति दर्शनान्यधिगन्तुं फणिराजकौशलीम् ॥ ३१ ॥

पठितं श्रुतमादरात्पुनः पुनरालोक्य रहस्यनूनकम् ।
प्रविभज्य निमज्जतः सुखे स विधेयान् विदधेतमां सुधीः ॥

सर्वार्थतत्त्वविदपि प्रकृतोपचारः शास्त्रोक्तभक्त्यतिशयेन विनीतशाली ।
सन्तोषयन् स जननीमनयत्कियन्ति संमानितो द्विजवरैर्दिवसानि धन्यः ॥

सा शङ्करस्य शरणं स च तज्जनन्या
अन्योन्ययोगविरहस्त्वनयोरसह्यः ।
नो वोढुमिच्छति तथाऽप्यमनुष्यभावा-
न्मेरुं गनः किमपि वाञ्छति दुष्प्रवेशम् ॥ ३४ ॥

कृतविद्यममुं चिकीर्षवः श्रितगार्हस्थ्यमथास्य बान्धवाः ।
अनुरूपगुणामचिन्तयन्ननवद्येषु कुलेषु कन्यकाम् ॥ ३५ ॥

अथ जातु दिदृक्षवः कलावतीर्णं मुनयः पुरद्विषम् ।
उपमन्युदधीचिगौतमत्रितलागस्त्यमुखाः समाययुः ॥ ३६ ॥

प्रणिपत्य स भक्तिसंनतः प्रमथिन्या सह तान्विधानवित् ।
विधिवन्मधुपर्कपूर्वया प्रतिजग्राह सपर्यया मुनीन् ॥ ३७ ॥

विहिताञ्जलिना विपश्चिता विनयोक्त्याऽर्पितविष्टरा अमी ।
ऋषयः परमार्थसंश्रया अमुना साकमचीकरन् कथाः ॥ ३८ ॥

निजगाद कथान्तरे मुनीञ्जननी तस्य समस्तदर्शिनः ।
वयमद्य कृतार्थतां गता भगवन्तो यदुपागता गृहान् ॥ ३९ ॥

क्व कलिर्बहुदोषभाजनं क्व च युष्मच्चरणावलोकनम् ।
तदलभ्यत चेत्पुराकृतं सुकृतं नः किमिति प्रपञ्च्यते ॥ ४० ॥

शिशुरेष किलातिशैशवे यदशेषागमपारगोऽभवत् ।
महिमाऽपि यदद्भुतोऽस्य तद् द्वयमेतत् कुरुते कुतूहलम् ॥

करुणार्द्रदृशाऽनुगृह्यते स्वयमागत्य भवद्भिरप्ययम् ।
यदतोऽस्य पुराकृतं तपः क्षममाकर्णयितुं मया यदि ॥ ४२ ॥

इति सादरमीरितां तया गिरमाकर्ण्य महर्षिसंसदि ।
प्रतिवक्तुमभिप्रचोदितो घटजन्मा प्रवयाः प्रचक्रमे ॥ ४३ ॥

तनयाय पुरा पतिव्रते तव पत्या तपसा प्रसादितः ।
स्मितपूर्वमुदाददे वचो रजनीवल्लभखण्डमण्डनः ॥ ४४ ॥

वरयस्व शतायुषः सुतानपि वा सर्वविदं मितायुषम् ।
सुतमेकमितीरितः प्रियं सति सर्वज्ञमयाचतात्मजम् ॥ ४५ ॥

तदभीप्सितसिद्धये शिवस्तव भाग्यात्तनयो यशस्विनि ।
स्वयमेव बभूव सर्ववित्तनोऽन्योऽस्ति यतः सुरेष्वपि ॥ ४६ ॥

इति तद्वचनं निशम्य सा मुनिवर्यं पुनरप्यवोचत ।
कियदायुरमुष्य भो मुने सकलज्ञोऽस्यनुकम्पया वद ॥ ४७ ॥

शरदोऽष्ट पुनस्तथाऽष्ट वै तनयस्यास्य तथाऽप्यमी पुनः ।
निरगिष्यति कारणान्तराद्भुवनेऽस्मिन् दश षट् च वत्सरान् ॥

इति वादिनि भाविनीं कथामृषिमुख्ये घटजे निवार्य तम् ।
ऋषयः सह तेन शङ्करं समुपामन्त्र्य ययुर्यथागतम् ॥ ४९ ॥

सृणिना करिणीव साऽर्दिता शुचिना शैवलिनीव शोषिता ।
मरुता कदलीव कम्पिता मुनिवाचा सुतवत्सलाऽभवत् ॥ ५० ॥

अथ शोकपरीतचेतनां द्विजराडित्थमुवाच मातरम् ।
अवगम्य च संसृतिस्थितिं किमकाण्डे परिदेवना तव ॥ ५१ ॥

प्रबलानिलवेगवेल्लितध्वजचीनांशुककोटिचञ्चले ।
अपि मूढमतिः कलेवरे कुरुते कः स्थिरबुद्धिमम्बिके ॥ ५२ ॥

कति नाम सुता न लालिताः कति वा नेह वधूरभुञ्जि हि ।
क नु ते क च ताः क वा वयं भवसङ्गः खलु पान्थसङ्गमः ॥ ५३ ॥

भ्रमतां भववर्त्मनि भ्रमान्न हि किंचित्सुखमम्ब लक्ष्यते ।
तदवाप्य चतुर्थमाश्रमं प्रयतिष्ये भवबन्धमुक्तये ॥ ५४ ॥

इति कर्णकठोरभाषणश्रवणाद्बाष्पपिनद्धकण्ठया ।
द्विगुणीकृतशोकया तया जगदे गद्गदवाक्यया मुनिः ॥ ५५ ॥

त्यज बुद्धिमिमां शृणुष्व मे गृहमेधी भव पुत्रमाप्नुहि ।
यज च क्रतुभिस्ततो यतिर्भवितासङ्ग सतामयं क्रमः ॥ ५६ ॥

कथमेकतनूभवा त्वया रहिता जीवितुमुत्सहेऽबला ।
अनयैव शुचौर्ध्वदैहिकं प्रमृतायां मयि कः करिष्यति ॥ ५७ ॥

त्वमशेषविदप्यपास्य मां अरठां वत्स कथं गमिष्यसि ।
द्रवते हृदयं कथं न ते न कथङ्कारमुपैति वा दयाम् ॥ ५८ ॥

एवं व्यथां तां बहुधाऽऽश्रयन्तीमपास्तमोहैर्बहुभिर्वचोभिः ।
अम्बामशोकां व्यदधाद्विपश्चिः शुद्धाश्रमेऽचिन्तयदेवदन्तः ॥ ५९ ॥

मम न मानममिच्छति संसृतिं न च पुनर्जननी विजिहासति ।
न च गुरुर्जननी तदुदीक्षते तदनुशासनमीपदपेक्षितम् ॥ ६० ॥

इति विचिन्त्य स जातु मिमङ्क्षया बहुजलां सरितं समुपाययौ ।
जलमगाहत तत्र समग्रहीज्जलचरश्चरणे जलमीयुषः ॥ ६१ ॥

स च रुरोद जले जलचारिणा धृतपदो ह्रियतेऽम्ब करोमि किम् ।
चलितुमेकपदं न च पारये बलवता विवृतोरुमुखेन ह ॥ ६२ ॥

गृहगता जननी तदुपाशृणोत् परवशा द्रुतमाप सरित्तटम् ।
मम मृतेः प्रथमं शरणं धवस्तदनु मे शरणं तनयोऽभवत् ॥ ६३ ॥

स च मरिष्यति नक्रवशं गतः शिव न मेऽजनि हन्त पुरा मृतिः ।
इति शुशोच जनन्यपि तीरगा जलगतात्मजवक्त्रगतेक्षणा ॥ ६४ ॥

त्यजति नूनमयं चरणं चलो जलचरोऽम्ब तवानुमतेन मे ।
सकलसंन्यसने परिकल्पिते यदि तवानुमतिः परिकल्पये ॥ ६५ ॥

इति शिशौ चकिता वदति स्फुटं व्यधित साऽनुमतिं द्रुतमम्बिका ।
सति सुते भविता मम दर्शनं मृतवतस्तदु नेति विनिश्चयः ॥ ६६ ॥

तदनु संन्यसनं मनसा व्यधादथ मुमोच शिशुं खलनक्रकः ।
शिशुरुपेत्य सरित्-तटमग्रमन् प्रगुवमेतदुवाच शुचाऽऽवृताम् ॥ ६७ ॥

मातर्विधेयमनुशाधि यदत्र कार्यं
संन्यासिना तदु करोमि न संदिहेऽहम् ।
पश्यादने तव यथेप्समी प्रदद्यु-
र्गृह्णन्ति ये धनमिदं मम पैतृकं यत् ॥ ६८ ॥

देहेऽम्ब रोगवशगे च ममाभयोऽमी
द्रक्ष्यन्ति शक्तिमनुसृत्य मृतिप्रसङ्गे ।

अर्थग्रहाञ्जनभयाच्च यथाविधानं
कुर्युश्च संस्कृतिममी न विमेयमीषत् ॥ ६९ ॥

यज्जीवितं जलचरस्य मुखात्तदिष्टं
संन्यासलसंगरवशान्मम देहपाते ।
संस्कारमेत्य विधिवत्त कुरु शङ्कर त्वं
नो चेत्प्रवृथ मम किं फलमीरय त्वम् ॥ ७० ॥

अह्नयम्ब रात्रिसमये समयान्तरे वा
संचिन्तय स्ववशगाऽवशगाऽथवा माम् ।
एष्यामि तत्र समयं सकलं विहाय
विश्वासमाप्नुहि मृतावपि संस्करिष्ये ॥ ७१ ॥

संन्यस्तवाञ्छिशुरयं विधवां अनाथां
क्षिप्त्वेति मां प्रति कदाऽपि न चिन्तनीयम् ।
यावन्मया स्थितवता फलमापनीयं
मातस्ततः शतगुणं फलमापयिष्ये ॥ ७२ ॥

इत्थं स्वमातरमनुग्रहणेच्छुरुक्त्वा
प्रोचे सनाभिजनमेष विचक्षणाग्रयः ।
संन्यासकल्पितमना व्रजितोऽस्मि दूरं
तां निक्षिपामि जननीमघवां भवत्सु ॥ ७३ ॥

एवं सनाभिजनमुत्तमयुत्तमाग्र्यः
श्रीमातृकार्यममिभाष्य करद्वयेन ।
संप्रार्थयन् स्वजननीं विनयेन तेषु
न्यक्षेपयन्नयनजाम्बु निषिञ्चमानाम् ॥ ७४ ॥

आत्मीयमन्दिरसमीपगतामथासौ
चक्रे विदूरगनदीं जननीहिताय ।
तत्तीरसंश्रितयदूद्वहधाम किंचित्
सा निम्नगाऽऽरभत ताडयितुं तरङ्गैः ॥ ७५ ॥

वर्षासु वर्षति हरौ जलमेत्य किंचि-
दन्तःपुरं भगवतोऽपनुनोद मृत्स्नाम् ।
आरब्ध मूर्तिरनघा चलितुं क्रमेण
देवोऽपि भेदिव न मुञ्चति भीरहिंसाम् ॥ ७६ ॥

प्रस्थातुकाममनघं भगवाननङ्गवाचाऽवदत् कथमपि प्रणिपत्य मातुः ।
पादारविन्दयुगलं परिगृह्य चाद्यां श्रीशङ्करं जनहितैककरं स कृष्णः ॥

आनेष्ट दूरगनदीं कृपया भवान् यां
सा माऽतिमात्रमनिशं बहुलोर्मिहस्तैः ।
क्लिश्नाति ताडनपरा वद कोऽभ्युपायो
यस्तं क्षमे न नितरां द्विजपुत्र यासि ॥ ७८ ॥

आकर्ण्य वाचमिति तामतनुं गुरुर्नः
प्रोद्धृत्य कृष्णमचलं शनकैर्भुजाभ्याम् ।
प्रातिष्ठिपन्निरुट एव न यत्र बाधा
नयेत्युदीर्य सुखमास्स्व चिराय चेति ॥ ७९ ॥

तस्मात् स्वमातुरपि भक्तिवशादनुज्ञाम्
आदाय संसृतिमहाम्बुधिविरक्तिमान् सः ।
गन्तुं मनो व्यधित संन्यसनाय दूरे
किं नाम्बितः पतितुमिच्छति वारिराशौ ॥ ८० ॥

इत्थं सुधीः स निरवग्रहमातृलक्ष्मी-
शानुग्रहो घटजबोधितभाविवेदी ।
एकान्ततो विगतभोग्यपदार्थतृष्णः
कृष्णे प्रतीचि निरतो निरगान्निशान्तात् ॥ ८१ ॥

यस्य त्रिनेत्रापरविग्रहस्य कामेन नास्थीयत दृक्पथेऽपि ।
तन्मूलकः संसृतिपाशबन्धः कथं प्रसज्येत महानुभावे ॥

स्मरेण किल मोहितौ विधिविधू च जातूत्पथौ
तथाऽहमपि मोहिनीकचकुचादिवीक्षापरः ।
अगामहह मोहिनीमिति विमृश्य सोऽजागरीत्
यतीशवपुषा शिवः स्मरकृतार्तिवार्तोज्झितः ॥ ८३ ॥

निष्प्रत्नाकुरुतासुरानपि सुरान् मारः सपत्राऽकरोद्
अप्यन्यानिह निष्कुलाऽकृततरां गन्धर्वविद्याधरान् ।
यो धानुष्कवरो नराननलसात्कृत्वोदलासीदलं
यत्तस्मिन्नगुरुरूपे मुनिमिर्वर्ण्यः कथं शङ्करः ॥ ८४ ॥

शान्तिश्चावशयन्मनो गतिमुखा दान्तिर्न्यरुद्ध क्रियाः
आधात्वा विषयान्तरादुपरतिः क्षान्तिर्मृदुत्वं व्यधात् ।
ध्यानैकोत्सुकतां समाधिविततिश्चक्रे तथाऽऽस प्रिया
श्रद्धा हन्त वसुप्रथाऽस्य तु कुतो वैराग्यतो वेत्ति नो ॥ ८५ ॥

विजनतावनितापरितोषितो विधिवितीर्णकृतात्मतनुस्थितिः ।
परिहरन् ममतां गृहगोचरां हृदयगेन शिवेन समं ययौ ॥

गच्छन् वनानि सरितो नगराणि शैलान्
ग्रामाञ्जनानपि पथन् पथि सोऽपि पश्यन् ।

नन्वैन्द्रजालिक इवाद्भुतमिन्द्रजालं
ब्रह्मैवमेव परिदर्शयतीति मेने ॥ ८७ ॥

नादिभिर्निजनिजाध्वकर्शितां वर्तयन् पथि जरद्गवीं निजे।
दण्डमेकमवहज्जगद्गुरुर्दण्डिताखिलकदध्वमण्डलः ॥ ८८ ॥

सारङ्गा इव विथकद्रुभिरहंकुर्वद्भिरुच्चैर्बलै-
र्जल्पाकैः परमर्मभेदनकलाकण्डूलजिह्वाञ्चलैः।
पाखण्डैरिह कान्दिशीकमनसः कं नाप्नुयुर्वैदिकाः
क्लेशं दण्डधरो यदि स न मुनिस्त्राता जगद्देशिकः ॥८९॥

दण्डान्वितेन धृतरागनवाम्बरेण गोविन्दनाथवनमिन्दुभवातटस्थम्।
तेन प्रविष्टमजनिष्ट दिनावसाने चण्डत्विषा च शिखरं चरमाचलस्य ॥

तीरद्रुमागतमरुद्विगतश्रमः सन् गोविन्दनाथवनमध्यतलं लुलोके।
शंसन्ति यत्र तरवो वसतिं मुनीनां शाखाभिरुज्ज्वलमृगाजिनवल्कलाभिः॥

आदेशमेकमनुयोक्तुमयं व्यवस्यन् प्रादेशमात्रविवरप्रतिहारभाजम्।
तत्र स्थितेन कथितां यमिनां गणेन गोविन्ददेशिकगुहां कुतुकी ददर्श॥

तस्य प्रपन्नरितोषदुहो गुहायाः स त्रिः प्रदक्षिणपरिक्रमणं विधाय।
द्वारं प्रति प्रणिपतञ्जनतापुरोगं तुष्टाव तुष्टहृदयस्तमपास्तशोकम् ॥ ९३ ॥

पर्यङ्कतां भजति यः पतगेन्द्रकेतोः पादाङ्गदत्वमथवा परमेश्वरस्य।
तस्यैव मूर्ध्नि धृतसाब्धिमहीध्रभूमेः शेषस्य विग्रहमशेषमहं भजे त्वाम्॥

दृष्ट्वा पुरा निजसहस्रमुखीममंपुरन्तेवसन्त इति तामपहाय शान्तः।
एकाननेन भुवि यस्त्ववतीर्य शिष्याननन्वग्रहीदनु स एव पतञ्जलिस्त्वम्॥

उरगपतिमुखादधीत्य साक्षात्स्वयमवनेर्विवरं प्रविश्य येन।
प्रकटितमचलातले सयोगं जगदुपकारपरेण शब्दभाष्यम् ॥ ९६ ॥

तमखिलगुणपूर्णं व्यासपुत्रस्य शिष्या-
दधिगतपरमार्थं गौडपादान्महर्षेः ।
अधिजिगमिषुरेष ब्रह्मसंस्थामहं त्वां
प्रसृमरमहिमानं प्रापमेकान्तभक्त्या ॥ ९७ ॥

तस्मिन्निति स्तुवति कस्त्वमिति ब्रुवन्तं
दिष्ट्या समाधिपदरुद्धविसृष्टचित्तम् ।
गोविन्ददेशिकमुवाच तदा वचोभिः
प्राचीनपुण्यजनितात्मविबोधचिह्नैः ॥ ९८ ॥

स्वामिन्नहं न पृथिवी न जलं न तेजो
न स्पर्शनो न गगनं न च तद्गुणा वा ।
नापीन्द्रियाण्यपि तु विद्धि ततोऽवशिष्टो
यः केवलोऽस्ति परमः स शिवोऽहमस्मि ॥ ९९ ॥

आकर्ण्य शङ्करमुनेर्वचनं तदित्थ-
मद्वैतदर्शनसमुत्थमुपात्तहर्षः ।
स प्राह शङ्कर स शङ्कर एव साक्षा-
ज्जातस्त्वमित्यहमवैमि समाधिदृष्ट्या ॥ १०० ॥

तस्योपदर्शितव्रतश्चरणौ गुहाया
द्वारे न्यपूजयदुपेत्य स शङ्करार्यः ।
आचार इत्युपदिदेश स तत्र तस्मै
गोविन्दपादगुरवे स गुरुर्मुनीनाम् ॥ १०१ ॥

शङ्करः सविनयैरुपचारैरभ्यतोषयदसौ गुरुमेनम् ।
ज्ञस तद्विदितमप्युपलिप्सुः संप्रदायपरिपालनबुद्ध्या ॥ १०२ ॥

भक्तिपूर्वकृततत्परिचर्यातोषितोऽधिकतरं यतिवर्यः ।
ब्रह्मतामुपदिदेश चतुर्भिर्वेदशेखरवचोभिरमुष्मै ॥ १०३ ॥

सांप्रदायिकपराशरपुत्रप्रोक्तसूत्रमतगत्यनुरोधात् ।
शास्त्रगूढहृदयं हि दयालोः कृत्स्नमप्ययमबुद्ध सुबुद्धिः ॥ १०४ ॥

व्यासः पराशरसुतः किल सत्यवत्यां
तस्यात्मजः शुकमुनिः प्रथितानुभावः ।
तच्छिष्यतामुपगतः किल गौडपादो
गोविन्दनाथमुनिरस्य च शिष्यभूतः ॥ १०५ ॥

शुश्राव तस्य निकटे किल शास्त्रजालं
यथाशृणोद्भुजगसङ्घगणस्त्वनन्तात् ।
शब्दाम्बुराशिमखिलं समयं विधाय
यथाखिलानि भुवनानि बिभर्ति मूर्ध्ना ॥ १०६ ॥

सोऽधिगम्य चरमाश्रममार्यः पूर्वपुण्यनिचयैरधिगम्यम् ।
स्थानमर्च्यमपि हंसपुरोगैरुन्नतं ध्रुव इवैत्य चकाशे ॥ १०७ ॥

छन्नमूर्तिरतिपाटलशाटीपल्लवेन रुरुचे यतिराजः ।
वासरोपरमरक्तपयोदाच्छादितो हिमगिरेरिव कूटः ॥ १०८ ॥

एष धूर्जटिरबोधमहेभं संनिहत्य रुधिराप्लुतचर्म ।
उद्यदुष्णकिरणारुणशाटीपल्लवस्य कपटेन बिभर्ति ॥ १०९ ॥

श्रुतीनामाक्रीडः प्रथितपरहंसोचितगति-
र्निजे सत्ये धाम्नि त्रिजगदतिवर्तिन्यभिरतः ।
असौ ब्रह्मैवास्मिन्न खलु विशये किन्तु कलये
बृहेरर्थं साक्षादनुपचरितं केवलतया ॥ ११० ॥

मितं पादेनैव त्रिभुवनमिहैकेन महसा
  विशुद्धं यत्सत्त्वं स्थितिजनिलयेष्वप्यनुगतम् ।
दशाकारातीतं स्वमहिमनि निर्भेदरमणं
  ततस्तं तद्विष्णोः परमपदमाख्याति निगमः ॥ १११ ॥

न भूतेष्वासङ्गः क्वचन न गवा वा विहरणं
  न भूत्या संसर्गो न परिचितता भोगिभिरपि ।
तदप्याम्नायान्तस्त्रिपुरदहनात्केवलदशा
  तुरीयं निर्द्वन्द्वं शिवमतितरां वर्णयति तम् ॥ ११२ ॥

न धर्मः सौवर्णो न पुरुषफलेषु व्ययकृता
  न चैवाहोगप्रस्फुरदरियुतः पार्थिवरयः ।
असाहाय्येनैवं सति वितथपूर्वप्रकजये
  कथं तं न ब्रूयान्निगमनिकुरंबं परशिवम् ॥ ११३ ॥

दुःखासारदुरन्तदुष्कृतघनां दुःसंसृतिप्रावृषं
  दुर्वारामिह दारुणां परिहरन्दूरादुदाराशयः ।
उच्चण्डप्रतिपक्षपण्डितयशोनालीकनालांकुर-
  ग्रासो हंसकुलावतंसपदभाक् सन्मानसे क्रीडति ॥ ११४ ॥

धीरं ब्रह्म जगच्च नीरमुभयं तद्योगमभ्यागतं
  दुर्भेदं त्वितरेतरं चिरतरं सम्यग्विभक्तीकृतम् ।
येनाशेषविशेषदोषलहरीमासेदुषीं शेमुषीं
  सोऽयं शीलवतां पुनाति परमो हंसो द्विजात्यग्रगीः ॥

नीरक्षीरनयेन तथ्यवितथे संपिण्डिते पण्डितै-
  र्दुर्बोधे सकलैर्विवेचयति यः श्रीशङ्कराख्यो मुनिः ।

हंसोऽयं परमोऽस्तु ये पुनरिहाशक्ताः समस्ताः स्थिताः
जृम्भाद्बिम्बफलाशनैकरसिकान् काकानमून्मन्महे ॥ ११६ ॥

दृष्टिं यः प्रगुणीकरोति तमसा बाह्येन मन्दीकृतां
नालीकप्रियतां प्रयाति भजते मित्रत्वमव्याहतम् ।
विश्वस्योपकृतेर्विलुम्पति मुहुश्चक्रस्य चार्तिं घनां
हंसः सोऽयमभिव्यनक्ति महतां जिज्ञासमर्थं मुहुः ॥ ११७ ॥

हंसभावमधिगम्य सुधीन्द्रे तं समर्चति च संसृतिमुक्त्यै ।
संचचाल कथयन्निव मेघश्चञ्चलाचपलतां विषयेषु ॥ ११८ ॥

एष नः स्पृशति निष्ठुरपादैस्तत्तु तिष्ठतु वितीर्णमवन्यै ।
अस्मदीयमपि पुष्पमनैषीदित्यरोधि नलिनीपतिरब्दैः ॥ ११९ ॥

वारिवाहनिवहे क्षणलक्ष्यश्रीररोचत किलाचिररोचिः ।
अन्तरङ्गगतबोधकलेव व्यापृतस्य विदुषो विषयेषु ॥ १२० ॥

किं नु विष्णुपदसंश्रयतोऽब्दा ज्ञाततामुपदिशन्ति सुहृद्भ्यः ।
यन्निशम्य निखिलाः स्वनमेषां बिभ्रति स्म किल निर्भरमोदान् ॥

देवराजमपि मां न यजन्ति ज्ञानगर्वभरिता यतयोऽमी ।
इत्यमर्षवशगेन पयोदस्यन्दनेन धनुराविरकारि ॥ १२२ ॥

आवपुः कुटजकन्दलबाणस्फीतरेणुकलिता वनवात्याः ।
सत्यमप्यमतमोगुणमिश्रा मायिका इव जगत्सु विलासाः ॥ १२३ ॥

षडङ्गुलिभिरसच्छविगात्राश्चित्रकार्मुकभृतः खरघोषाः ।
ध्यानपद्ममथनाय यतीनां विद्युदुज्ज्वलदृशो घनदैत्याः ॥ १२४ ॥

उत्तमाङ्गुरनकुञ्जलधारा वारिदा गगनधाम पिधाय ।
शङ्करो हृदयमात्मनि कृत्वा संजहार सकलेन्द्रियवृत्तीः ॥ १२५ ॥

शनैः शान्त्वालापैः सनयमुपनीतोपनिषदां
   चिरायत्तं त्यक्त्वा सहजमभिमानं दृढतरम् ।
तमेत्य श्रेयांसं सपदि परहंसं पुनरसा-
   वधीरा संस्प्रष्टुं ध्रुवु सपदि तद्बालिद्मगात् ॥ १२६ ॥

न सूर्यो नैवेन्दुः स्फुरति न च ताराततिरियं
   श्रुतो विद्युल्लेखा कियदिह कृशानोर्विलसितम् ।
न विभौ रोदस्यौ न च समयमस्निग्धजलदे
   चिदाकाशे सान्द्रसुखरसनवर्षणपविरतम् ॥ १२७ ॥

किमादेयं हेयं किमिति सहजानन्दजलधा-
   वतिस्वच्छे तुच्छीकृतपकलमाये परशिवे ।
तदेतस्मिन्नेव स्वमहिमनि विस्मापनपदे
   स्वतः सत्ये नित्ये रहसि परमे सोऽकृत कृती ॥ १२८ ॥

प्राप विष्णुपदभागपि मेघः प्रावृडागमनतो मलिनत्वम् ।
विद्युदुज्ज्वलरुचाऽनुसृतश्च कोऽप्ययमन्यपि भजेन्न विरागम् ॥ १२९ ॥

आशये कलुषिते सलिलानां मानसोत्कहृदयाः कलहंसाः ।
कोऽन्यथा भवति जीवनलिप्सुर्निश्चये भजति मानसचिन्ताम् ॥

अभ्रवर्त्मनि परिभ्रमनिच्छन्शुभ्रदीधितिरिदभ्रपयोदे ।
न प्रकाशनमवाप कलावान् कश्चकास्ति मलिनाम्बरवासी ॥ १३१ ॥

पातकावलिरिवातपिपासा प्राप तृप्तिमुदकस्य चिराय ।
प्राप्नुयादमृतमप्यमिताप्स्वन् फलतो यत पनायपकारी ॥

इन्दुरीर्णजलवाहविनीते स्फीततारकरिपूरनमालें ।
मानभूरभवदम्बनिकुञ्जे नीलनीलघनमालिनि काले ॥ १३२ ॥

अग्रहारशतसंभृतशोभे सुग्रहाक्षतुरगः स महात्मा ।
अध्युवास तटमिन्दुभवायाः सुष्ठुपास्यचरणं गुरुमर्चन् ॥ १३४॥

त्रस्तमर्त्यगणमस्तमितार्कं हस्तिहस्तपृथुलोदकधाराः ।
मुञ्चति स्म समुदञ्चितविद्युत्पञ्चराग्रमहिस्रगुरजस्रम् ॥ १३५ ॥

तीरभूरुहततीरपकर्षन्नग्रहारनिकरैः सह पूरः ।
आययावधिकघोषमनल्पः कल्पवार्धिलहरीव तटिन्याः ॥ १३६ ॥

घोषवारिभरभीरुनराणां घोषमेष कलुषं स निशम्य ।
दैशिकं ध्रुवसमाधिविधानं वीक्ष्य च क्षणमभूदविचक्षुः ॥ १३७ ॥

सोऽभिमन्त्र्य करकं त्वरमाणस्तत्प्रवाहपुरतः प्रणिधाय ।
कृत्स्नमत्र समवेशयदम्भः कुम्भसंभव इव स्वकरेऽब्धिम् ॥ १३८ ॥

तं निशम्य निखिलैरपि लोकैरुत्थितोऽस्य गुरुरुक्तमुदन्तम् ।
योगसिद्धिमचिरादयमापेत्यभ्यपद्यततरां परितोषम् ॥ १३९ ॥

छात्रमुख्यमब्रुमाह कियद्भिर्वासरैर्गतघने गगने सः ।
पश्य सौम्य शरदा विमलं खं विद्ययेव विशदं परतत्त्वम् ॥ १४० ॥

वारिदा यतिवराश्च सुधायोधारया सदुपदेशगिरा च ।
ओषधीरनुचरांश्च कृतार्थीकृत्य संप्रति हि यान्ति यथेच्छम् ॥ १४१ ॥

शीतदीधितिरसौ जलमुग्भिर्मुक्तपद्धतिरतिस्फुटकान्तिः ।
भाति तत्त्वविदुषामिव बोधो मायिकावरणनिर्गमशुभ्रः ॥ १४२ ॥

वारिवाहनिवहे प्रतियाते भान्ति भानि शुचिभानि शुभानि ।
मत्सरादिविगमे सति मैत्रीपूर्विका इव गुणाः परिशुद्धाः ॥ १४३ ॥

मत्स्यकच्छपमयी धृतचक्रा गर्भवर्तिभुवना नलिनाढ्या ।
श्रीयुताऽद्य तटिनी परहंसैः सेव्यते मधुरिपोरिव मूर्तिः ॥ १४४ ॥

नीरदाः सुचिरसंभृतमेते जीवनं द्विजगणाय वितीर्य ।
त्यक्तविद्युदबलाः परिशुद्धाः प्रव्रजन्ति घनवीथिगृहेभ्यः ॥ १४५ ॥

चन्द्रिकाभसितचर्चितगात्रश्चन्द्रमण्डलकमण्डलुशोभी ।
बन्धुजीवकुसुमोत्करशाटीसंवृतो यतिरिवायमनेहाः ॥ १४६ ॥

हंससंगविलसद्विरजस्कं क्षोभवर्जितमपह्नुतपङ्कम् ।
वारि सारसमतीव गभीरं तावकं मन इव प्रतिभाति ॥ १४७ ॥

शारदाम्बुधरजालपरीतं भ्राजते गगनमुज्ज्वलभानु ।
लिप्तचन्दनरजः समुदञ्चत्कौस्तुभं मुररिपोरिव वक्षः ॥ १४८ ॥

पङ्कजानि समुदूढहरीणि प्रोद्गतानि विकचानि कनन्ति ।
सौम्य योगकलयेव विफुल्लान्युन्मुखानि हृदयानि मुनीनाम् ॥ १४९ ॥

रेणुभस्मकलितैर्दलशाटीसंवृतैः कुसुमलिङ्जपमालैः ।
बन्धवद्धिजलकमण्डलुयुक्तैर्धार्यते क्षितिरुहैर्यतितौल्यम् ॥ १५० ॥

धारणादिभिरपि श्रवणाद्यैर्वार्षिकाणि दिवसान्यपनीय ।
पादपद्मरजसाऽद्य पुनन्तः संचरन्ति हि जगन्ति महान्तः ॥ १५१ ॥

तद्भवान् व्रजतु वेदकदम्बाद्दुद्भवां भवदवाम्बुदमालाम् ।
तत्त्वपद्धतिमभिज्ञ विवेक्तुं सत्वरं हरपुरीमविमुक्ताम् ॥ १५२ ॥

अत्र कृष्णमुनिना कथितं मे पुत्र तच्छृणु पुरा तुहिनाद्रौ ।
शतशत्रुमुखदेवतजुष्टे सत्रमत्रिमुनिकर्तृकमास ॥ १५३ ॥

संसदि श्रुतिशिरोऽर्थमुदारं शंसति स्म स पराशरसूनुः ।
इत्यपृच्छमहमत्रभवन्तं सत्यवाचमभियुक्ततमं तम् ॥ १५४ ॥

आर्य वेदनिकरः प्रविभक्तो भारतं कृतमकारि पुराणम् ।
योगशास्त्रमपि सम्यगभाषि ब्रह्मसूत्रमपि प्रतितमासीत् ॥ १५५ ॥

अत्र केचिदिह विप्रतिपन्नाः कल्पयन्ति हि यथायथमर्थान् ।
अन्यथाग्रहणनिग्रहदक्षं भाष्यमस्य भगवन् करणीयम् ॥ १५६ ॥

मद्वचः स च निशम्य सभायां विद्वदग्रमर वाचमवोचत् ।
पूर्वमेव दिविषद्भिरुदीर्णः पार्वतीपतिसदस्ययमर्थः ॥ १५७ ॥

वत्स त्वं शृणु समस्तविदेको मत्समस्तव भविष्यति शिष्यः ।
कुम्भ एव सरितः सकलं यः संहरिष्यति महोल्बणमम्भः ॥ १५८ ॥

दुर्मतानि निरसिष्यति सोऽयं शर्मदायि च करिष्यति भाष्यम् ।
कीर्तयिष्यति यशस्तव लोकः कार्तिकेन्दुकरकौतुकि येन ॥ १५९ ॥

इत्युदीर्य मुनिराट् स वनान्ते पत्युराप सुगिरिं गिरिजायाः ।
तन्मुखाच्छ्रुतमशेषमिदानीं सन्मुनिप्रिय मया त्वयि दृष्टम् ॥ १६० ॥

स त्वमुत्तमपुमानसि कश्चित्तत्त्ववित्प्रवर नान्यसमानः ।
तद् यतस्व निरवद्यनिबन्धैः सद्य एव जगदुद्धरणाय ॥ १६१ ॥

गच्छ वत्स नगरं शशिमौलेः स्वच्छदेवतटिनीकमनीयम् ।
तावता परमनुग्रहमाद्या देवता तव करिष्यति तस्मिन् ॥ १६२ ॥

एवमेनमनुशास्य दयालुः पावयन्निजदृशा विससर्ज ।
भावतः स्वचरणाम्बुजसेवामेव शश्वदभिकामयमानम् ॥ १६३ ॥

पङ्कजप्रतिभटं पदयुग्मं शङ्करोऽस्य निरगादसहिष्णुः ।
तद्वियोगमभिवन्द्य कथंचित्तद्विलोकनमयन् हृदयाब्जे ॥ १६४ ॥

प्राप तापसवरः स हि काशीं नीपकाननपरीतसमीपाम् ।
आपगानिकटहाटकचञ्चद्यूपपंक्तिसमुदञ्चितशोभाम् ॥ १६५ ॥

संददर्श स भगीरथतप्तामन्दतीव्रतपसः फलभूताम् ।
योगिराड्रुचितनीरनिकुञ्जां भोगिभूषणजटाकटभूषाम् ॥ १६६ ॥

विष्णुपादनखराजननाढ्या शम्भुमौलिशशिसंगमनाढ्या ।
या हिमाद्रिशिखरात्पतनाढ्या स्फटिकोपमजला प्रविभाति ॥ १६७ ॥

गायतीव कलषट्पदनादैर्नृत्यतीव पवनोच्चलिताब्जैः ।
मुञ्चतीव हसितं सितफेनैः श्लिष्यतीव चपलोर्मिकरैर्या ॥ १६८ ॥

श्यामला क्वचिदपाङ्गमयूखैश्चिलिता क्वचन भूषणभाभिः ।
पाटला कुचतटीगलितैर्या कुंकुमैः क्वचन दिव्यवधूनाम् ॥ १६९ ॥

सोऽवगाह्य सलिलं सुरसिन्धोरुत्ततार शितिकण्ठजटाभ्यः ।
जाह्नवीसलिलवेगहृतस्तद्योगपुण्यपरिपूर्ण इवेन्दुः ॥ १७० ॥

स्वर्णदीजलकणाहितशोभा मूर्तिरस्य सुतरां विललास ।
चन्द्रपादगलदम्बुकणाङ्का पुत्रिका शशिशिलारचितेव ॥ १७१ ॥

विश्वेशश्चरणयुगं प्रणम्य भक्त्या हर्यायैस्त्रिदशवरैः समर्चितस्य ।
सोऽनैषीत्प्रयतमना जगत्पवित्रे क्षेत्रेऽसाविह समयं कियन्तमार्यः ॥

इति श्रीमाधवीये तत्सुखाश्रमनिवासगः ।
संक्षेपशङ्करजये सर्गोऽयं पञ्चमोऽभवत् ॥

( आदितः श्लोकाः—५५६ )

## ॥ षष्ठः सर्गः ॥

### (आत्मविद्याप्रतिष्ठा)

अथाऽऽगमद्ब्राह्मणसूनुरादरादधीतवेदो दलयन् स्वभासा ।
तेजांसि कश्चित्सरसीरुहाक्षो दिदृक्षमाणः किल देशिकेन्द्रम् ॥ १ ॥

आगत्य देशिकपदाम्बुजयोरपप्तत्संसारवारिधिमनुत्तरमुत्तितीर्षुः ।
वैराग्यवानकृतदारपरिग्रहश्च कारुण्यनावमधिरुह्य दृढां दुरापाम् ॥ २ ॥

उत्थाप्य तं गुरुरुवाच गुरुर्द्विजानां
कस्त्वं क धाम कुत आगत आत्तधैर्यः ।
बालोऽप्यबालधिषणः प्रतिभासि मे त्वं
एकोऽप्यनेक इव नैकशरीरभावः ॥ ३ ॥

पृष्टो बभाण गुरुमुत्तरमुत्तरज्ञो
विप्रो गुरो मम गृहं भुव चोलदेशे ।
यत्राऽऽपगा वहति तत्र कवेरकन्या
यस्याः पयो हरिपदाम्बुजभक्तिमूलम् ॥ ४ ॥

अटाट्यमानो महतो दिदृक्षुः क्रमादिमं देशमुपागतोऽस्मि ।
बिभेमि मज्जन् भववारिराशौ तत्पारगं मां कृपया विधेहि ॥ ५ ॥

अपाङ्गैरुत्तुङ्गैरमृतलहरभङ्गैः परगुरो
शुचा दूनं दीनं कलय दयया मामविमृशन् ।
गुणं वा दोषं वा मम किमपि संचिन्तयसि चेत्
तदा कैव श्लाघा निरवधिकृपानीरधिरिति ॥ ६ ॥

स्वान्ते दीनदयालुताकृतयशोराशिस्त्रिलोकीगुरो
तूर्णं चेद्दयसे ममाद्य न तथा कारुण्यतः श्रीमति ।
वर्षन् भूरि मरुस्थलीषु जलभृत्सद्भिर्यथा पूज्यते
नैवं वर्षशतं पयोनिधिजले वर्षन्नपि स्तूयते ॥ ७ ॥

त्वत्सारस्वतसारसारससुधाकूपारसत्सारस-
स्रोतःसंभृतसंततोज्ज्वलजलक्रीडा मतिर्मे मुने ।
चञ्चत्पञ्चशरादिवञ्चनहतं न्यञ्चं प्रपञ्चं हित-
ज्ञानाकिञ्चनमाविरिञ्चमखिलं चालोचयन्त्यञ्चतु ॥ ८ ॥

सौरं धाम सुधामरीचिनगरं पौरन्दरं मन्दिरं
कौबेरं शिविरं हुताशनपुरं सामीरसद्मोच्चरम् ।
वैधं चाऽऽवसथं त्वदीयफणितिश्रद्धासमिद्धात्मनः
शुद्धाद्वैतविदो न दोग्धि विरतिश्रीधातुकं कौतुकम् ॥ ९ ॥

न भीमा रामाद्याः सुषमविषवल्लीफलसमाः
समारम्भन्ते नः किमपि कुतुकं जातु विषयाः ।
न गण्यं नः पुण्यं रुचिरतररम्भाकुचतटी-
परीरम्भारम्भोज्ज्वलमपि न पौरन्दरपदम् ॥ १० ॥

न चञ्चद्वैरिञ्चं पदमपि भवेदादरपदं
वचो मन्ये नव्यं यदकृत कृती शङ्करगुरुः ।
चकोरालीचञ्चूपुटदलितपूर्णेन्दुविगल-
त्सुधाधाराकारं तदिह वयमीहेमहि मुहुः ॥ ११ ॥

द्यावाभूमिदिगन्तकीर्तनवयशःप्रस्तावसौवस्तिकैः
पूर्वाखर्वतपःपचेलिमफलैः सर्वाधिमुष्टिंधयैः ।

दीनाढ्यंकरणैर्भवाय नितरां वैरायमाणैरलं-
कर्मीणं प्रसितं त्वदीयभजनैः स्यान्मामकीनं मनः ॥ १२ ॥

संसारबन्धामयदुःखशान्त्यै स एव नस्त्वं भगवानुपास्यः ।
भिषक्तमं त्वा भिषजां शृणोमीत्युक्तस्य योऽभूदुदितावतारः ॥ १३ ॥

इत्युक्तवन्तं कृपया महात्मा व्यदीपयत्सांन्यसनं यथावत् ।
प्राहुर्महान्तः प्रथमं विनेयं तं देशिकेन्द्रस्य सनन्दनाख्यम् ॥ १४ ॥

संसारघोरजलधेस्तरणाय शश्वत्सांयात्रिकीभवनमर्दयमानमेनम् ।
हन्तोत्तमाश्रमतरीमधिरोप्य पारं निन्ये निपातितकृपारसकेनिपातः ॥

येऽप्यन्येऽमुं सेवितुं देवतांशा यातास्तेऽपि प्राय एवं विरक्ताः ।
क्षेत्रे तस्मिन्नेव शिष्यत्वमस्य प्रापुः स्पष्टं लोकरीत्याऽपि गन्तुम् ॥

व्याख्या मौनमनुत्तराः परिदलच्छङ्काकलङ्काङ्कुरा-
श्छात्रा विश्वपवित्रचित्रचरितास्ते वामदेवादयः ।
तस्यैतस्य विनीतलोकततिमुद्धर्तुं धरित्रीतलं
प्राप्तस्याद्य विनेयतामुपगता धन्याः किलान्यादृशाः ॥

शेषः साधुभिरेव तोषयति नृच्छन्दैः पुमर्थार्थिनो
वाल्मीकिः कविराज एष वितथैरर्थैर्मुहुः कल्पितैः ।
व्याचष्टे किल दीर्घसूत्रसरणिर्वाचं चिरादर्थदो
व्यासः शङ्करदेशिकस्तु कुरुते सद्यः कृतार्थानहो ॥ १८ ॥

पक्षितुल्यमहिमानमुपासांचक्रिरे तमधिमुक्तनिवासाः ।
पक्षसृत्यनुसृतामपि साध्वीं चक्रुरात्मधिषणां तदुपास्त्या ॥ १९ ॥

षण्डभानुरिव भानुमण्डलैः पारिजात इव पुष्पजाततः ।
पत्रपशुरिव नेत्रवारिजैश्छात्रपङ्क्तिभिरलं ललास सः ॥ २० ॥

एकदा खलु वियत्त्रिपुरद्विड्भाललोचनहुताशनभानोः ।
विस्फुलिङ्गपदवीं दधतीषु प्रज्वलत्तपनकान्तशिलासु ॥ २१ ॥

दर्शयत्युरुमरीचिसरस्वत्पूरमुज्ज्यपरमायिनि भानौ ।
साधुनैकमणिकुट्टिमयूर्च्छद्रश्मिजालकशिखावलपिच्छम् ॥ २२ ॥

पङ्कजावलिविलीनमराले पुष्करान्तरभिगत्वरमीने ।
शाखिकोटरशयालुशकुन्ते शैलकन्दरशरण्यमयूरे ॥ २३ ॥

शङ्करो दिवसमध्यमभागे पङ्कजोत्पलपरागकषायाम् ।
जाह्नवीमभिययौ सह शिष्यैराह्निकं विधिवदेष विधित्सुः ॥ २४ ॥

सोऽन्त्यजं पथि निरीक्ष्य चतुर्भिर्भीषणैः श्वभिरनुद्रुतमारात् ।
गच्छ दूरमिति तं निजगाद प्रत्युवाच च स शङ्करमेनम् ॥ २५ ॥

अद्वितीयमनवद्यमसङ्गं सत्यबोधसुखरूपमखण्डम् ।
आमनन्ति यतयो निगमान्तास्तत्र भेदकलना तव चित्रम् ॥ २६ ॥

दण्डमण्डितकरा धृतकुण्डाः पाटलाम्बरसनाः पटुवाचः ।
ज्ञानगन्धरहिता गृहसंस्थान् वञ्चयन्ति किल केचन वेषैः ॥ २७ ॥

गच्छ दूरमिति देहमुताहो देहिनं परिजिहीर्षसि विद्वन् ।
भिद्यतेऽन्नमयतोऽन्नमयं किं साक्षिणश्च यतिपुङ्गव साक्षी ॥ २८ ॥

ब्राह्मणश्वपचभेदविचारः प्रत्यगात्मनि कथं तव युक्तः ।
बिम्बितेऽम्बरमणौ सुरनद्यामन्तरं किमपि नास्ति सुरायाम् ॥ २९ ॥

शुचिर्द्विजोऽहं श्वपच व्रजेति मिथ्याग्रहस्ते मुनिवर्य कोऽयम् ।
सन्तं शरीरेष्वशरीरमेकमुपेक्ष्य पूर्णं पुरुषं पुराणम् ॥ ३० ॥

अचिन्त्यमव्यक्तमनन्तमाद्यं विस्मृत्य रूपं विमलं विमोहात् ।
कलेवरेऽस्मिन्करिकर्णलोलाकृतिन्यहंता कथमाविरास्ते ॥ ३१ ॥

विद्यामवाप्यापि विमुक्तिपथ्यां जागर्ति तुच्छा जनसंग्रहेच्छा ।
अहो महान्तोऽपि महेन्द्रजाले मज्जन्ति मायाविवरस्य तस्य ॥ ३२ ॥

इत्युदीर्य वचनं विरतेऽस्मिन् सत्यवाक्तदनु विप्रतिपन्नः ।
अत्युदारचरितोऽन्त्यजमेनं प्रत्युवाच स च विस्मितचेताः ॥ ३३ ॥

सत्यमेव भवता यदिदानीं प्रत्यवादि तनुभृत्प्रवरैतत् ।
अन्त्यजोऽयमिति सम्प्रति बुद्धिं संत्यजामि वचसाऽऽत्मविदस्ते ॥

जानते श्रुतिशिरांस्यपि सर्वे मन्वते च विजितेन्द्रियवर्गाः ।
युञ्जते हृदयमात्मनि नित्यं कुर्वते न धिषणामपभेदाम् ॥ ३५ ॥

भाति यस्य तु जगद्दृढबुद्धेः सर्वमप्यनिशमात्मतयैव ।
स द्विजोऽस्तु भवतु श्वपचो वा वन्दनीय इति मे दृढनिष्ठा ॥ ३६ ॥

या चितिः स्फुरति विष्णुमुखे सा पुत्तिकावधिषु सैव सदाऽहम् ।
नैव दृश्यमिति यस्य मनीषा पुल्कसो भवतु वा स गुरुर्मे ॥ ३७ ॥

यत्र यत्र च भवेदिह बोधस्तत्तदर्थसमवेक्षणकाले ।
बोधमात्रमवशिष्टमहं तद्यस्य धीरिति गुरुः स नरो मे ॥ ३८ ॥

भाषमाण इति तेन कलावानेष नैक्षत तमन्त्यजमग्रे ।
धूर्जटिं तु समुदैक्षत मौलिस्फूर्जदैन्दवकलं सह वेदैः ॥ ३९ ॥

भयेन भक्त्या विनयेन धृत्या युक्तः स हर्षेण च विस्मयेन ।
तुष्टाव शिष्टानुमतः स्तवैस्तं दृष्ट्वा दृशोर्गोचरमष्टमूर्तिम् ॥ ४० ॥

दासस्तेऽहं देहदृष्ट्याऽस्मि शंभो जातस्तेंऽशो जीवदृष्ट्या त्रिदृष्टे ।
सर्वस्यात्मन्नात्मदृष्ट्या त्वमेवेत्येवं मे धीर्निश्चिता सर्वशास्त्रैः ॥ ४१ ॥

यदालोकादन्तर्बहिरपि च लोको वितिमिरो
न मञ्जूषा यस्य त्रिजगति न शाणो न च खनिः ।

यतन्ते चैकान्तं रहसि यतयो यत्प्रणयिनः
नमस्तस्मै स्वस्मै निखिलनिगमोत्तंसमणये ॥ ४२ ॥

अहो शास्त्रं शास्त्रात्किमिह यदि न श्रीगुरुकृपा
चिता सा किं कुर्यान्ननु यदि न बोधस्य विभवः ।
किमालम्ब्यश्चासौ न यदि परतत्त्वं मम तथा
नमः स्वस्मै तस्मै यदवधिरिहाश्चर्यधिषणा ॥ ४३ ॥

इत्युदारवचनैर्भगवन्तं संस्तुवन्तमथ च प्रणमन्तम् ।
बाष्पपूर्णनयनं मुनिवर्यं शङ्करः सबहुमानमुवाच ॥ ४४ ॥

असदादिपदवीमभजस्त्वं शोधिता तव तपोधननिष्ठा ।
बादरायण इव त्वमपि स्याः सद्वरेण्य मदनुग्रहपात्रम् ॥ ४५ ॥

संविभज्य सकलश्रुतिजालं ब्रह्मतन्त्रमकरोदनुशिष्टः ।
यत्र काणभुजसांख्यपुरोगाण्युद्धृतानि कुमतानि समूलम् ॥ ४६ ॥

तत्र मूढमतयः कलिदोषाद् भिन्नवेदवचनोद्दलितानि ।
भाष्यकाण्यरचयन् बहुधुर्दूष्यतामुपगतानि च कैश्चित् ॥ ४७ ॥

तद्भवान्विदितवेदशिखार्थस्तानि दुर्मतिमतानि निरस्य ।
सूत्रभाष्यमधुना विदधातु श्रुत्युपोद्बलितयुक्त्यभियुक्तम् ॥ ४८ ॥

एतदेव विबुधैरपि सेन्द्रैरर्चनीयमनवद्यमुदारम् ।
वाचकं कमलयोनिसभायामप्यवाप्स्यति वरां वरिवस्याम् ॥ ४९ ॥

भास्कराभिनवगुप्तपुरोगान्नीलकण्ठगुरुमण्डनमुख्यान् ।
पण्डितानथ विजित्य जगत्यां ख्यापयाद्वयमते परतत्त्वम् ॥ ५० ॥

मोहसंतमसशासनाथांस्तत्र तत्र विनिवेश्य विनेयान् ।
पालनाय परतत्त्वसरण्या मामुपैष्यसि ततः कृतकृत्यः ॥ ५१ ॥

एवमेनमनुगृह्य कृपावानागमैः सह शिवोऽन्तरधत्त ।
विस्मितेन मनसा सह शिष्यैः शङ्करोऽपि सुरसिन्धुमयासीत् ॥ ५२ ॥

संनिवर्त्य विधिमाह्निकमीशं ध्यायतो गुरुमथाऽखिलभाष्यम् ।
कर्तुमुद्यतमभूद्गुणसिन्धोर्मानसं निखिललोकहिताय ॥ ५३ ॥

कर्तृत्वशक्तिमधिगम्य स विश्वनाथात्
काशीपुरान्निरगमत्त्वविकासमाजः ।
प्रीतः सरोजमुकुलादिव चञ्चरीक-
निर्बन्धतः सुखमवाप यथा द्विजेन्द्रः ॥ ५४ ॥

अद्वैतदर्शनविदां भुवि सार्वभौमो यात्येष इत्युडुपबिम्बसितातपत्रम् ।
अस्ताचले वहति चारु पुरः प्रकाशव्याजेन चामरमधादिव दिक्सुकान्ता॥

शान्तां दिशं देवनृणां विहाय नान्या दिगस्मै समरोचताद्धा ।
तत्रत्यतीर्थानि निषेवमाणो गन्तुं मनोऽधाद्बदरीं क्रमात्सः ॥ ५६ ॥

तेनान्ववर्ति महता क्वचिदुष्णशालि
शीतं क्वचित्क्वचिदृजु क्वचिदप्यरालम् ।
उत्कण्टकं क्वचिदकण्टकवत्क्वचिच्च
तद्वर्त्म मूर्खजनचित्तमिवाव्यवस्थम् ॥ ५७ ॥

आत्मानमक्रियमपव्ययमीक्षितापि
पान्थैः समं विचलितः पथि लोकरीत्या ।
आदत्फलानि मधुराण्यपिबत्पयांसि
प्रायादुपाविशदशेत तथोदतिष्ठत् ॥ ५८ ॥

तेन व्यनीयत तदा पदवी दवीयस्यासादिना च बदरी वनपुण्यभूमिः ।
गौरीगुरुस्खदमन्दझरीपरीता खेलत्सुरीयुवदरी परिभाति यस्याम् ॥ ··

स द्वादशे वयसि तत्र समाधिनिष्ठै-
र्ब्रह्मर्षिभिः श्रुतिशिरो बहुधा विचार्य ।
षड्भिश्च सप्तभिरथो नवभिश्च खिन्नै-
र्मन्ये गभीरमधुरं फणति स्म भाष्यम् ॥ ६० ॥

करतलकलिताद्वयात्मतत्त्वं क्षपितदुरन्तचिरंतनप्रमोहम् ।
उपचितमुदितोदितैर्गुणौघैरुपनिषदामयमुज्जहार भाष्यम् ॥ ६१ ॥

ततो महाभारतसारभूताः स व्याकरोद्भागवतीश्च गीताः ।
सनत्सुजातीयमसत्सुदूरं ततो नृसिंहस्य च तापनीयम् ॥ ६२ ॥

ग्रन्थानसंख्यांस्तदनूपदेशसाहस्रिकादीन्व्यदधात्सुबोध्यः ।
श्रुत्वाऽर्थविधानविवेकपाशान्मुक्ता विरक्ता यतयो भवन्ति ॥ ६३ ॥

श्रीशङ्कराचार्यरवावुदेत्य प्रकाशमाने कुमतिप्रणीताः ।
व्याख्यान्धकाराः प्रलयं समीयुर्दुर्वादिचन्द्रप्रभयाऽविमुक्ताः ॥ ६४ ॥

अथ मुनीन्दुर्विविधान्विनेयानध्यापयामास स नैजभाष्यम् ।
तर्कैः परेषां तरलैर्निरस्यन्मरीचिभिः सिन्धुवदप्रशोष्यम् ॥ ६५ ॥

निजशिष्यहृदब्जभास्वतो गुरुवर्यस्य सनन्दनादयः ।
शमपूर्वगुणैरशुश्रुवन्कतिचिच्छिष्यगणेषु मुख्यताम् ॥ ६६ ॥

स निशामितराश्रयतो लसच्छ्रियममद्भुतमाप्य सनन्दनः ।
श्रुतनिजश्रुतिकोऽप्यभवत्पुनः पिपठिषुर्गहनार्थविवित्सया ॥ ६७ ॥

अद्वन्द्वभक्तिममुमात्मपदारविन्दद्वन्द्वे नितान्तदयमानमना मुनीन्द्रः ।
आम्नायशेखररहस्यनिधानकोशमात्मीयकोशमखिलं त्रिरपाठयत्तम् ॥

ईर्ष्यापराकुलहृदामितराश्रमाणां प्रख्यापयन्ननुपमामदसीयभक्तिम् ।
अभ्रापगापारतटस्थममुं कदाचिदाकारयन्निगमशेखरदेशिकेन्द्रः ॥ ६९ ॥

संतारिकाऽनवधिसंसृतिसागरस्य किं तारयेन्न सरितं गुरुपादभक्तिः ।
इत्यञ्जसा प्रविशतः सलिलं द्युसिन्धुः पद्मान्युदञ्चयति तस्य पदे पदे स्म ॥

पाथोरुहेषु विनिवेश्य पदं क्रमेण प्राप्तोपकण्ठममुमप्रतिमानभक्तिम् ।
आनन्दविस्मयनिरन्तनिरन्तरोऽसावाश्लिष्य पद्मपदनामपदं व्यतानीत् ॥

तं पाठयन्तमनवद्यवचनमात्मविद्यां ये तु स्थिताः सदसि तत्त्वविदां सगर्वाः ।
आचिक्षिपुः कुमतपाशुपताभिमानाः केचिद्विवेकविटपोग्रदवायमानाः ॥

शङ्किकल्पनमनल्पमनीषः श्रुत्युदाहरणतः स निरस्य ।
ईषदस्तमितगर्वभराणामागमानपि ममन्थ परेषाम् ॥ ७३ ॥

अद्वितीयनिरता सति भेदे मुक्तिरीशसमतेव कथं स्यात् ।
ध्यानजा किमिति सा न विनश्येद्भावकार्यमखिलं हि न नित्यम् ॥

किं च संक्रमणमीशगुणानामिष्यते पशुषु मोक्षदशायाम् ।
तत्र साध्ववयवैर्विधुराणां संक्रमो न घटते हि गुणानाम् ॥ ७५ ॥

पद्मगन्ध इव गन्धवहेऽस्मिन्नात्मनीश्वरगुणोऽस्त्विति चेन्न ।
तत्र गन्धसमवायि नभस्वत्संयुतं दिशति गन्धधियं यत् ॥ ७६ ॥

किं चैकदेशेन समाश्रयन्ते कार्त्स्न्येन वा शंभुगुणा विमुक्तान् ।
पूर्वे तु पूर्वोदितदोषसङ्गस्त्वन्तेऽज्ञतादिः परमेश्वरे स्यात् ॥ ७७ ॥

इत्थं तर्कैः कुलिशकठिनैः पण्डितंमन्यमाना
मिथस्त्वार्थाः स्मयभरपदं तत्यजुस्तान्त्रिकास्ते ।
पक्षाघातैरिव रयभरैस्ताड्यमानाः फणासु
क्ष्वेडज्वालां खगकुलपतेः पन्नगाः साभिमानाः ॥ ७८ ॥

व्याख्याजृम्भितपाटवात्फणिपतेर्मन्दाक्षमुद्दीपयन्
संव्यालक्षितविष्ण्वहृद्वनरुहेष्वादित्यवाग्मुद्रयन्

उद्वेलस्वयशःसुमैः स भगवत्पादो जगद्भूषयन्
कुर्वन् वादिमृगेषु निर्भरमभाच्छार्दूलविक्रीडितम् ॥ ७९ ॥

वेदान्तकान्तारकृतप्रचारः सुतीक्ष्णसद्युक्तिनखाग्रदंष्ट्रः ।
भयङ्करो वादिमतङ्गजानां महर्षिकण्ठीरव उल्ललास ॥ ८० ॥

अमानुषं तस्य यतीश्वरस्य विलोक्य बालस्य मनः प्रभावम् ।
अत्यन्तमाधुर्ययुतान्तरङ्गाः काशीपुरस्था जगदुस्तदेत्थम् ॥ ८१ ॥

अस्मान्मुहुर्धौतितसर्वतन्त्रात्पराभवं पण्डितपुण्डरीकाः ।
प्रपेदिरे भास्करगुप्तमिश्रमुरारिविघेन्द्रगुरुप्रधानाः ॥ ८२ ॥

अस्याऽऽत्मनिष्ठातिशयेन तुष्टः प्रादुर्भवन् कामरिपुः पुरस्तात् ।
प्रचोदयामास किल प्रणेतुं वेदान्तशारीरकसूत्रभाष्यम् ॥ ८३ ॥

कुदृष्टितिमिरस्फुरत्कुमतपङ्कमग्नां पुरा
पराशरभुवा चिराद्युधमुदे बुधेनोद्धृताम् ।
अहो बत जरद्गवीमनघभाष्यसूक्तामृतै-
रपङ्कयति शङ्करः प्रणतशङ्करः सादरम् ॥ ८४ ॥

त्रैलोक्यं ससुखं क्रियाफलपयो भुङ्क्ते ययाऽऽविष्कृतं
यस्या वृद्धतरे महीसुरगृहे वासः प्रवृद्धाध्वरे ।
तां पङ्कप्रसृते कुतर्ककुहरे घोरैः खरैः पातितां
निष्पङ्कामकरोत्स भाष्यजलधेः प्रक्षाल्य सूक्तामृतैः ॥

मिथ्या वक्तीति कैश्चित्परुषमुपनिषद्दूरमुत्सारिताऽभू-
दन्यैरस्मिन्नियोज्यं परिचरितुमसावर्हतीति प्रणुन्ना ।
अर्थाभासं दधानैर्मृदुभिरिव परैर्वञ्चिता चोरितार्थं-
विन्दत्यानन्दमेषा सुचिरमशरणा शङ्करार्ये प्रपन्ना ॥

हन्तुं बौद्धोऽन्वधावत्तदनु कथमपि स्वात्मलाभः कणादा-
ज्ञातः कौमारिलाद्यैर्निजपदगमने दर्शितं मार्गमात्रम् ।
सांख्यैर्दुःखं विनीते परमथ रचिता प्राणहृत्यर्हताऽन्यै-
रित्थं खिन्नं पुमांसं व्यधित करुणया शङ्करार्यः परेशम् ॥

ग्रस्तं भूतैर्न देवं कतिचन ददृशुः के च दृष्ट्वाऽप्यधीराः
केचिद्भूतैर्वियुक्तं व्यधुरथ कतिनः केऽपि सर्वैर्विमुक्तम् ।
किन्त्वेतेषामसत्त्वं न विदधुरजहान्नैव भीतिं ततोऽसौ
तेषामुच्छिद्य सत्तामभयमकृत तं शङ्करः शङ्करांशः ॥ ८८ ॥

चार्वाकैर्निह्नुतः प्राग्बलिभिरथ मृषा रूपमापाद्य गुप्तः
काणादैर्हा नियोज्यो व्यरचि बलवताऽऽकृष्य कौमारिलेन ।
सांख्यैराकृष्य हत्वा मलमपि रचितो यः प्रधानैकतन्त्रः
कृष्ट्वा सर्वेश्वरं तं व्यतनुत पुरुषं शङ्करः शङ्करांशः ॥ ८९ ॥

वाचः कल्पलताः प्रसूनसुमनःसन्दोहसन्दोहनाः
भाष्ये भूष्यतमे समीक्षितवतां श्रेयस्करे शांकरे ।
भाष्याभासगिरो दुरन्वयगिराऽऽश्लिष्टा विसृष्टा गुणै-
रिष्टाः स्युः कथमम्बुजासनवधूदौर्भाग्यगर्भीकृताः ॥

कामं कामकिरातकार्मुकलतापर्यायनिर्यातया
नाराचच्छटया विपाटितमनोधैर्यैर्धिया कल्पितान् ।
आचार्याननगर्यनिर्यदभिदासिद्धान्तशुद्धान्तरो
धीरो नानुसरीसरीति विरसान्ग्रन्थानवन्ध्यापहान् ॥ ९१ ॥

सुधास्यन्दाहन्ताविजयिभगवत्पादरचना-
समस्कन्धान् ग्रन्थान् रचयति निबद्धा यदि तदा ।

विशङ्कां भक्तानां मृडमुकुटमृङ्गाटसरितः
कृतौ तुल्या कुल्या नियतमुपशल्याहृतगतिः ॥ ९२ ॥

यया दीनाधीना घनकनकधारा समरचि
प्रतीतिं नीताऽसौ शिवयुवतिसौन्दर्यलहरी।
भुजङ्गो रौद्रोऽपि श्रुतभयहृदाधायि सुगुरो-
र्गिरां धारा सेयं कलयति कवेः कस्य न मुदम् ॥ ९३ ॥

गिरां धारा कल्पद्रुमकुसुमधारा परगुरो-
स्तदर्थाली चिन्तामणिकिरणवेण्या गुणनिका।
अभङ्गव्यङ्ग्यौघः सुरसुरभिदुग्धोर्मिसदृभू-
र्दिवं भव्यैः काव्यैः सृजति विदुषां शङ्करगुरुः ॥ ९४ ॥

वाचा मोचाफलाभाः श्रमशमनविधौ ते समर्थास्तदर्था
व्यङ्ग्यं भङ्ग्यन्तरं तत्खलु किमपि सुधामाधुरीसाधुरीतिः।
मन्ये धन्यानि गाढं प्रशमिकुलपतेः काव्यगव्यानि भव्या-
न्येकश्लोकोऽपि येषु प्रथितकविजनानन्दसन्दोहकन्दः ॥ ९५ ॥

वाग्गुम्भैः कुरुविन्दकन्दलनिभैरानन्दकन्दैः सता-
मर्थौघैररविन्दवृन्दकुहरस्यन्दन्मरन्दोज्ज्वलैः।
व्यङ्ग्यैः कल्पतरुप्रफुल्लसुमनःसौरभ्यगर्भीकृतै-
र्दत्ते कस्य मुदं न शङ्करगुरोर्भव्यार्थकाव्यावलिः ॥ ९६ ॥

तत्ताहग्यतिशेखरोद्ग्रथितनिबद्धार्थ्यं निशम्येर्ष्यया
केचिद्देवनदीतटस्थविदुषामक्षांघ्रिपक्षर्थिताः।
मौर्ख्यात्खण्डयितुं प्रयत्नमनुमानैकेक्षणा विक्षमा-
श्चक्रुर्भाव्यविचार्य चित्रकिरणं चित्राः पतङ्गा इव ॥ ९७ ॥

निघर्षणच्छेदनतापनाद्यैर्यथा सुवर्णं परभागमेति ।
विवादिभिः साधु विमथ्यमानं तथा मुनेर्भाष्यमदीपि भूयः ॥ ९८ ॥

स भाष्यचन्द्रो यतिदुग्धसिन्धोरुत्थाय दास्यन्नमृतं बुधेभ्यः ।
विधूय गोभिः कुमतान्धकारानतर्पयद्विप्रमनश्चकोरान् ॥ ९९ ॥

अनादिवाक्सागरमन्थनोत्था सेव्या बुधैर्धिक्कृतदुःसपत्नैः ।
निश्चाणयन्ती विजरामरत्वं विद्युते भाष्यसुधा यतीन्दोः ॥ १०० ॥

सतां हृदब्जानि विकासयन्ती तमांसि गाढानि विदारयन्ती ।
प्रत्यर्थ्युलूकान् प्रविलापयन्ती भाष्यप्रभाऽभाद्यतिवर्यभानोः ॥ १०१ ॥

न्यायमन्दरनिमन्थनजाता भाष्यनूतनसुधा श्रुतिसिन्धोः ।
केवलश्रवणतो विबुधेभ्यश्चित्रमत्र वितरत्यमृतत्वम् ॥ १०२ ॥

पादादासीत्प्रमनाभस्य गङ्गा शंभोर्वक्त्राच्छाङ्करी भाष्यसूक्तिः ।
आद्या लोकान्दश्यते मज्जयन्तीत्यन्या मग्नानुद्धरत्येष भेदः ॥ १०३ ॥

व्यासो दर्शयति स्म सूत्रकलितन्यायौघरत्नावली-
रर्थालाभवशान्न कैरपि बुधैरेता गृहीताश्चिरम् ।
अर्थाप्त्या सुलभाभिराभिरधुना ते मण्डिताः पण्डिता
व्यासश्चाऽऽप कृतार्थतां यतिपतेरौदार्यमाश्चर्यकृत् ॥ १०४ ॥

विद्वज्जालतपःफलं श्रुतिवधूधम्मिल्लमल्लीस्रजं
सद्वंशास्फुरत्स्फुरवमधुराराग्ध्यातिपुण्योदयम् ।
वाग्देवीचिरभोग्यभाग्यविभवप्राग्भारकोशालयं
भाष्यं ते निपिबन्ति हन्त न पुनर्येषां भवे संभवः ॥ १०५ ॥

मन्थानाद्रिधुरन्धरा श्रुतिसुधासिन्धोर्यतिक्ष्मापते-
र्ग्रन्थानां फणितिः परावरविदामानन्दसंधायिनी ।

तमब्रवीद्भाष्यकृदग्रवाचं सूत्रार्थविद्भ्योऽस्तु नमो गुरुभ्यः ।
सूत्रज्ञताहंकृतिरस्ति नो मे तथाऽपि यत्पृच्छसि तद्ब्रवीमि ॥ ५ ॥

पप्रच्छ सोऽध्यायमथाधिकृत्य तृतीयमारम्भगतं यतीशम् ।
'तदन्तरे'त्यादिकमस्ति सूत्रं ब्रूहीतदर्थं यदि वेत्थ किंचित् ॥ ६ ॥

स प्राह जीवः करणावसादे संवेष्टितो गच्छति भूतसूक्ष्मैः ।
ताण्डिश्रुतौ गौतमजैवलीयप्रश्नोत्तराभ्यां प्रथितोऽयमर्थः ॥ ७ ॥

इत्युक्तमर्थं निशमय्य तेन स वावदूकः शतधा विकल्प्य ।
अखण्डयत्पण्डितकुञ्जराणां मध्ये महाविस्मयमादधानः ॥ ८ ॥

अनूद्य सर्वं फणितं तदीयं सहस्रधा तीर्थकरश्चखण्ड ।
तयोः सुराचार्यफणीन्द्रवाचोर्दिनाष्टकं वाक्कलहो जजृम्भे ॥ ९ ॥

एवं वदन्तौ यतिराड्द्विजेन्द्रौ विलोक्य पार्श्वस्थितपद्मपादः ।
आचार्यमाहेति महीसुरोऽयं व्यासो हि वेदान्तरहस्यवेत्ता ॥ १० ॥

त्वं शङ्करः शङ्कर एव साक्षात् व्यासस्तु नारायण एव नूनम् ।
तयोर्विवादे सततं प्रसक्ते किं किङ्करोऽहं करवाणि सद्यः ॥ ११ ॥

इतीदमाकर्ण्य वचो विचित्रं स भाष्यकृत्सूत्रकृतं दिदृक्षुः ।
कृताञ्जलिस्तं प्रयतः प्रणम्य बभाण वाणीं नवपद्यरूपाम् ॥ १२ ॥

भवांस्तडिद्गारुजटाकिरीटप्रवर्षुकाम्भोधरकान्तिकान्तः ।
शुभ्रोपवीती धृतकृष्णचर्मा कृष्णो हि साक्षात्कलिदोषहन्ता ॥ १३ ॥

भावत्कसूत्रप्रतिपाद्यतादृक्परापरार्थप्रतिपादकं सत् ।
अद्वैतभाष्यं तव संमतं चेत्सोढ्वा ममाऽऽगः पुरतो भवाऽऽशु ॥ १४ ॥

एवं वदन्नयमैक्षत कृष्णमाराधार्मिकरप्रतिचारुजटाकलापम् ।
विद्युल्लतावलयवेष्टितवारिदाभं चिन्मुद्रया प्रकटयन्तमभीष्टमर्थम् ॥ १५ ॥

गाढोपगूढमनुरागभृता रजन्या गर्भार्पितं विदधतं शरदिन्दुबिम्बम् ।
तापिच्छनीलतनुकान्तिझरीपरीतं कान्तेन्दुकान्तघटितं करकं दधानम् ॥

सप्ताधिकाच्छदविंशतिमौक्तिकाढ्यां
सत्यस्य मूर्तिमिव बिभ्रतमक्षमालाम् ।
तत्तादृशस्वपतिवंशविवर्धनात्प्राक्
तारावलीमुडुगणामिव चानुनेतुम् ॥ १७ ॥

शार्दूलचर्मोद्वहनेन भूतेरुद्धूलनेनापि जटाच्छटाभिः ।
रुद्राक्षमालावलयेन शम्भोरर्धासनाध्यासनलब्धपात्रम् ॥ १८ ॥

अद्वैतविद्यासृणितीक्ष्णधारावशीकृताहंकृतिकुञ्जरेन्द्रम् ।
स्वगात्रचञ्चज्ज्वलसूत्रदामनियन्त्रिताकृत्रिमगोसहस्रम् ॥ १९ ॥

तथाद्भुतोज्ज्वलकीर्तिशालिशिष्यालिसंशोभितपार्श्वभागम् ।
कटाक्षवीक्षामृतवर्षधारानिवारिताशेषजनानुतापम् ॥ २० ॥

विलोक्य वाचंयमसार्वभौमं स शङ्करोऽशङ्कितदर्शनं तम् ।
गुरुं गुरूणामपि हृष्टचेताः प्रत्युद्ययौ शिष्यगणैः समेतः ॥ २१ ॥

अत्यादराच्छात्रगणैः सहासौ प्रत्युद्गतस्तच्चरणौ प्रणम्य ।
यत्यग्रगामी विनयी प्रहृष्यन्नित्यब्रवीत्सत्यवतीसुतं सः ॥ २२ ॥

द्वैपायन स्वागतमस्तु तुभ्यं दृष्ट्वा भवन्तं चरिता मयाऽर्थाः ।
युक्तं तदेतत्त्वयि सर्वकालं परोपकारव्रतदीक्षितत्वात् ॥ २३ ॥

मुने पुराणानि दशाष्ट साक्षाच्छ्रुत्यर्थगर्भाणि सुदुष्कराणि ।
कृतानि पद्यद्वयमत्र कर्तुं को नाम शक्नोति सुसंगतार्थम् ॥ २४ ॥

वेदार्णवं व्यतिषुतं व्यदधाश्चतुर्धा
शाखाप्रभेदनवशादपि तान् विभक्तान् ।

मन्दाः कलौ क्षितिसुरा जनितार एते
वेदान् ग्रहीतुमलसा इति चिन्तयित्वा ॥ २५ ॥

एष्यद्विजानासि भवन्तमथं गतं च सर्वं न न वेत्सि यत्तत् ।
नो चेत्कथं भूतभवद्भविष्यत्कथाप्रबन्धान् रचयेरजानन् ॥ २६ ॥

आभासयन्नन्तरमङ्गमान्ध्यं स्थूलं च सूक्ष्मं बहिरन्तरं च ।
अपानुदन् भारतशीतरश्मिरभूदपूर्वो भगवत्पयोधेः ॥ २७ ॥

वेदाः षडङ्गं निखिलं च शास्त्रं महान् महाभारतवारिराशिः ।
त्वत्तः पुराणानि च संबभूवुः सर्वं त्वदीयं खलु वाङ्मयाण्यम् ॥

द्वीपे क्वचित् समुदयन्नृतमेव धाम
शाखासहस्रमचिरः शुकसेव्यमानः ।
उल्लासयत्यहह यस्तिलको मुनीना-
मुच्चैः फलानि सुदृशां निजपादभाजाम् ॥ २९ ॥

धत्से सदाऽऽनिशमनाय हृदा गिरीशं
गोपायसेऽधिवदनं च चिरन्तनीर्गाः ।
दूरीकरोषि नरकं च दयार्द्रदृष्ट्या
कस्ते गुणान् गदितुमद्भुतकृष्ण शक्तः ॥ ३० ॥

यमामनन्ति श्रुतयः पदार्थे न सन्न चासन्न बहिर्न चान्तः ।
स सच्चिदानन्दघनः परात्मा नारायणस्त्वं पुरुषः पुराणः ॥ ३१ ॥

इति स्तुतस्तेन यथाविधानमासेदिवान् विष्टरमात्मनिष्ठः ।
द्वैपायनः प्रश्रयनम्रपूर्वकायं यतीशानमिदं बभाषे ॥ ३२ ॥

त्वमस्मदादेः पदवीं गतोऽभूरखण्डपाण्डित्यमबोधयं ते ।
शुकर्षिवत् प्रीतिकरोऽसि विद्वन् पुरेव शिष्यैः सह मा भ्रमीस्त्वम् ॥

कृतं त्वया भाष्यमितीन्दुमौलेः समाङ्गणे सिद्धमुखान्निशम्य।
हृदा प्रहृष्टेन दिदृक्षया ते दृगध्वनीनः प्रशमिन्नभूवम् ॥ ३४ ॥

इत्थं मुनीन्द्रवचनश्रवणोत्थहर्षं रोमाञ्चपूरमिषतो बहिरुत्प्लवन्तम्।
बिभ्रत्तमभ्रुरुचिमारव्यददभ्रशक्तिं श्रीशङ्करः शुकमतार्णवपूर्णचन्द्रः ॥

सुमन्तुपैलप्रथमा मुनीन्द्रा महानुभावा ननु यस्य शिष्याः।
तृणाल्लघीयानपि तत्र कोऽहं तथाऽपि कारुण्यमदर्शि दीने ॥ ३६ ॥

सोऽहं समस्तार्थविवेचकस्य कृत्वा भवत्सूत्रसहस्ररश्मेः।
भाष्यप्रदीपेन महर्षिमान्य नीराजनं धृष्टतया न लज्जे ॥ ३७ ॥

अकारि यत्साहसमात्मबुद्ध्या भवत्प्रशिष्यव्यपदेशभाजा।
विचार्य तत्सूक्तिदुरुक्तिजालमर्हः समीकर्तुमिदं कृपालुः ॥ ३८ ॥

इत्थं निगद्योपरतस्य हस्ताद्धस्तद्वयेनाऽऽदरतः स भाष्यम्।
आदाय सर्वत्र निरक्षतासौ प्रसादगाम्भीर्यगुणाभिरामम् ॥ ३९ ॥

सूत्रानुकारिमृदुवाक्यनिवेदितार्थं स्वीयैः पदैः सह निराकृतपूर्वपक्षम्।
सिद्धान्तयुक्तिविनिवेशिततत्त्वरूपं दृष्ट्वाऽभिनन्द्य परितोषवशादवोचत् ॥

न साहसं तात भवानकार्षीद्यत्सूत्रभाष्यं गुरुणा विनीतः।
विचार्यतां सूत्रदुरुक्तमत्रेत्येतन्महत्साहसमित्यवैमि ॥ ४१ ॥

मीमांसकानामपि मुख्यभूतो वेत्ताखिलव्याकरणानि विद्वन्।
विनिःसरेत्ते वदनाद्यतीन्दो गोविन्दशिष्यस्य कथं दुरुक्तम् ॥ ४२ ॥

न प्राकृतस्त्वं सकलार्थदर्शी महानुभावः पुरुषोऽसि कश्चित्।
यो ब्रह्मचर्यादिपराक्रियार्य पर्यव्रजः सूर्य इवान्धकारान् ॥ ४३ ॥

षड्दर्शगर्भाणि लघूनि यानि निगूढभावानि च मत्कृतानि।
त्वामेवमित्थं विरहय्य नास्ति यस्तानि सम्यग्विवरीतुमीष्टे ॥ ४४ ॥

निसर्गदुर्ज्ञानतमानि को वा सूत्राण्यलं वेदितुमर्थतः सन् ।
क्लेशस्तु तावान् विवरीतुरेषां यावान् प्रणेतुर्विबुधा वदन्ति ॥ ४५ ॥

भाष्यं मदीयमवबुध्य यथावदेवं
भाष्यं प्रणेतुमनलं भगवानपीशः ।
सांख्यादिनाऽन्यथयितं श्रुतिमूर्धवर्त्मो-
द्धर्तुं कथं परशिवांशभृते प्रभुः स्यात् ॥ ४६ ॥

शेषानुषङ्गकलयाऽपि सुदूरमुक्तो धत्सेऽधिमानममहो सकलाः कलाश्च ।
सर्वात्मना गिरिजयोपहितस्वरूपः शक्यो न वर्णयितुमद्भुतशङ्करस्त्वम् ॥

व्याख्याप्यसंख्यैः कविभिः पुरैतद्व्याख्यास्यते कैश्चिदितः परं च ।
भवानिवास्मद्धृदयं किमेते सर्वज्ञ विज्ञातुमलं निगूढम् ॥ ४८ ॥

व्याख्याहि भूयो निगमान्तविद्यां विभेदवादान् विदुषो विजित्य ।
ग्रन्थान् भुवि ख्यापय सानुबन्धानहं गमिष्यामि यथाभिलाषम् ॥

इत्युक्तवन्तं तमसाववोचत् कृतानि भाष्याण्यपि पाठितानि ।
ध्वस्तानि सम्यक्कुमतानि धैर्यादितः परं किं करणीयमस्ति ॥ ५० ॥

मुहूर्तमात्रं मणिकर्णिकायां विधेहि सद्वत्सल सन्निधानम् ।
चिरायतेऽहं परमायुषोऽन्ते त्यजामि यावद्वपुरद्य हेयम् ॥ ५१ ॥

इतीदमाकर्ण्य वचो विचिन्त्य स शङ्करं प्राह कुरुष्व मैवम् ।
अनिर्जिताः सन्ति वसुन्धरायां त्वया बुधाः केचिदुदारविद्याः ॥ ५२ ॥

जयाय तेषां कति हायनानि वस्तव्यमेव स्थिरधीस्त्वयाऽपि ।
नो चेन्मुमुक्षा भुवि दुर्लभा स्यात् स्थितिर्यथा मातृधुतस्य बाल्ये ॥

प्रसन्नगम्भीरभवत्प्रणीतप्रबन्धसन्दर्भभवः प्रहर्षः ।
प्रोत्साहयत्यात्मविदामृषीणां वरेण्य विश्राणयितुं वरं ते ॥ ५४ ॥

अष्टौ वयांसि विधिना तव वत्स दत्ता-
न्यन्यानि चाष्ट भवता सुधियाऽर्जितानि।
भूयोऽपि षोडश भवन्तु भवाज्ञया ते
भूयाच्च भाष्यमिदमारविचन्द्रतारम् ॥ ५५ ॥

त्वमायुषाऽनेन विरोधिवादिगर्वाङ्कुरोन्मूलनजागरूकैः ।
वाक्यैः कुरुष्वोज्झितभेदबुद्धीनद्वैतविद्यापरिशन्धिनोऽन्यान् ॥ ५६ ॥

इतीरयन्तं प्रति वाचमूचे स शङ्करः पावितसर्वलोकः ।
त्वत्पुत्रसम्बन्धवशान्मदीयं भाष्यं प्रचारं भुवि यातु विद्वन् ॥ ५७ ॥

इतीरयित्वा चरणौ ववन्दे यतिर्मुनेः सर्वविदो महात्मा ।
प्रदाय संभाव्य वरं मुनीशो द्वैपायनः सोऽन्तरधाद्यतात्मा ॥ ५८ ॥

इत्थं निगद्य ऋषिपुङ्गवे तिरोहितेऽस्मि-
न्नन्तर्विवेकनिविरम्प्य विस्मये सः ।
इत्याऽपहारिनिकषाधिकपारसानां
तत्ताडयां कथमहो विरहो विपन्नः ॥ ५९ ॥

तत्पादपद्मे निजचित्तपद्मे पश्यन् कथञ्चिद्विरहं निषह्य ।
यतिक्षितीशोऽपि गुरोर्नियोगान्मनो दधे दिग्विजये मनीषी ॥ ६० ॥

भाष्यस्य वार्तिकमपीह कुमारिलेन भट्टेन कारयितुमादरवान् मुनीन्द्रः ।
वन्ध्यायमानदरविन्ध्यमहीध्रवरणं वाचंयमेन चरितां हरितं प्रतस्थे ॥

ततः स वेदान्तरहस्यवेत्ता मेधाऽभजानां तमसा मतानाम् ।
प्रयागमागात्प्रथमं जिगीषुः कुमारिलं साधितकर्मजालम् ॥ ६२ ॥

श्यामजलां किल तनूनसितां सितां च
कर्तुं कलिन्दसुतया कलितानुषङ्गाम् ।

अह्लाय जह्नुतनयामथ निह्नुतार्घां
मध्येप्रयागमगमन्मुनिरर्थमार्गम् ॥ ६३ ॥

गङ्गाप्रवाहैरुपरुद्धवेगा कलिन्दकन्या स्तिमितप्रवाहा ।
अपूर्वसख्यागतलज्जयेव यत्राधिकं भाति निचितपाथाः ॥ ६४ ॥

अन्तेवसद्भिरमलच्छविसम्प्रदायमध्येतुमाश्रितजलां कुहचिन्मरालैः ।
चक्रद्वयेन रजनीसहवाससौख्यसंशीलनाय किल संवलितां परत्र ॥

यत्राप्लुता दिव्यशरीरभाज आचन्द्रतारं दिवि भोगजातम् ।
संभुञ्जते व्याधिकथानभिज्ञाः प्राहेममर्थं श्रुतिरेव साक्षात् ॥ ६६ ॥

अज्ञातसंभवतिरोधिकथाऽपि वाणी
यस्याः सितासितत्तयैव गृणाति रूपम् ।
भागीरथीं यमुनया परिचर्यमाणा-
मेतां विगाह्य मुदितो मुनिरित्यभाणीत् ॥ ६७ ॥

सिद्धापगे पुरविरोधिजटोपरोध-
क्रुद्धा कुतः श्रतमदःसदशान् विधत्से ।
यद्वा न किं नु भवितासि जटाभिरेषा-
मद्धा जडप्रकृतयो न विदन्ति भावि ॥ ६८ ॥

सन्मार्गवर्तनपराऽपि सुरापगे त्वमस्थीनि नित्यमशुचीनि किमाददासि ।
आ ज्ञातमम्ब हृदयं तव सज्जनानां प्रायः प्रसाधनकृते कृतमज्जनानाम् ॥

स्वापानुपङ्कजडताभरिताञ्जनौघान् स्वापानुपङ्कजडताविधुरान्विधत्से ।
दूरीभवद्विपपरागहृदोऽपि तूर्णं धूर्तावतंसयति देवि क एष मार्गः ॥

इति स्तुवंस्तापसराट् त्रिवेण्यां शाट्या समाच्छाद्य कटीं कुपीटे ।
दोर्दण्डयुग्मोद्धृतवेणुदण्डोऽघमर्षणस्नानमना बभूव ॥ ७१ ॥

सरसौ प्रयागे सह शिष्यसंघैः स्वयं कृतार्थो जनसंग्रहार्थी ।
असारे माताऽपि च सा पुपोष दधार या दुःखमसोढ भूरि ॥ ७२ ॥

अनुष्ठितिं द्रागवसाय्य वातैः कल्हारशीतैरुपसेव्यमानः ।
तीरे विशश्राम तमालमालिन्यत्रान्तरेऽश्रूयत लोकवार्ता ॥ ७३ ॥

गिरेरवप्लुत्य गतिः सतां यः प्रामाण्यमाम्नायगिरामवादीत् ।
यस्य प्रसादात् त्रिदिवौकसोऽपि प्रपेदिरे प्राक्तनयज्ञभागान् ॥ ७४ ॥

सोऽयं गुरोरुन्मथनप्रसक्तं महच्चरं दोषमपाकरिष्णुः ।
अशेषवेदार्थविदास्तिकत्वात्तुषानलं प्राविशदेष धीरः ॥ ७५ ॥

अयं समीताखिलवेदमन्त्रः कुलंकषालोडितसर्वतन्त्रः ।
नितान्तदूरीकृतदुष्टतन्त्रस्त्रैलोक्यविश्रामितकीर्तियन्त्रः ॥ ७६ ॥

श्रुत्वेति तां सत्वरमेष गच्छन् व्यलोकयत् तुषराशिसंस्थम् ।
प्रभाकराद्यैः प्रथितप्रभावैरुपस्थितं साश्रुमुखैर्विनेयैः ॥ ७७ ॥

धूमायमानेन तुषानलेन संदह्यमानेऽपि वपुष्यशेषे ।
संदृश्यमानेन मुखेन बाष्पपरीतपद्मश्रियमादधानम् ॥ ७८ ॥

दूरे विधूतावनताङ्गभङ्ग्या तं देशिकं दृष्टिपथावतीर्णम् ।
ददर्श भट्टो ज्वलदग्निकल्पो जुगोप यो वेदपथं जितारिः ॥ ७९ ॥

अदृष्टपूर्वं श्रुतपूर्ववृत्तं दृष्ट्वाऽतिमोदं स जगाम भट्टः ।
अबीभरच्छिष्यगणैः सपर्यामुपाददे तामपि देशिकेन्द्रः ॥ ८० ॥

उपाचमिशः परितुष्टचित्तः प्रदर्शयामास स भाष्यमस्मै ।
सर्वो निबन्धो ह्यमलोऽपि लोके शिष्टेक्षितः संचरणं प्रयाति ॥ ८१ ॥

दृष्ट्वा भाष्यं हृष्टचेताः कुमारः प्रोचे वाचं शङ्करं देशिकेन्द्रम् ।
लोके लभ्यो मत्सरग्रामशाली सर्वज्ञानो नात्मभावस्य पात्रम् ॥ ८२ ॥

अष्टौ सहस्राणि विभान्ति विद्वन् सद्वार्तिकानां प्रथमेऽत्र भाष्ये ।
अहं यदि स्यामगृहीतदीक्षो ध्रुवं विधास्ये सुनिबन्धमस्य ॥ ८३ ॥

भवादृशां दर्शनमेव लोके विशेषतोऽस्मिन् समये दुरापम् ।
पुराऽऽर्जितैः पुण्यचयैः कथंचित्त्वमद्य मे दृष्टिपथं गतोऽभूः ॥ ८४ ॥

असारसंसारपयोधिमध्ये निमज्जतां सद्भिरुदारवृत्तैः ।
भवादृशैः संगतिरेव साध्या नान्यस्तदुत्तारविधावुपायः ॥ ८५ ॥

चिरं दिदृक्षे भगवन्तमित्थं त्वमद्य मे दृष्टिपथं गतोऽभूः ।
नह्यत्र संसारपथे नराणां स्वेच्छाविधेयोऽस्मिमतेन योगः ॥ ८६ ॥

युनक्ति कालः क्वचिदिष्टवस्तुना क्वचिच्चरिष्टेन च नीचवस्तुना ।
तथैव संयोज्य वियोजयत्यसौ सुखासुखे कालकृते प्रबोद्धृम्यतः ॥

कुतो निबन्धो निरणायि पन्था निरासि नैयायिकयुक्तिजालम् ।
तथाऽन्वभूवं विषयोत्थजातं न कालमेनं परिहर्तुमीशे ॥ ८८ ॥

निरास्थमीशं श्रुतिलोकसिद्धं श्रुतेः स्वतो मात्वमुदाहरिष्यन् ।
न निह्नुवे येन विना प्रपञ्चः सांख्याय कल्पेत न जातु विद्वन् ॥

तथागताक्रान्तमभूदशेषं स वैदिकोऽध्वा विरलीबभूव ।
परीक्ष्य तेषां विजयाय मार्गं प्रावर्ति संजातुमनाः पुराणम् ॥ ९० ॥

सशिष्यसङ्घाः प्रविशन्ति राज्ञां गेहं तदादि स्ववशे विधातुम् ।
राजा मदीयोऽजिरमसदीयं तदाद्रियध्वं न तु वेदमार्गम् ॥ ९१ ॥

वेदोऽप्रमाणं बहुमानबाधात् परस्परव्याहतवाचकत्वात् ।
एवं वदन्तो विचरन्ति लोके न काचिदेषां प्रतिपत्तिरासीत् ॥ ९२ ॥

अनादिभं वेदविघातदक्षैस्ताञ्जाशकं जेतुमबुध्यमानः ।
तदीयसिद्धान्तरहस्यवार्धीन्निषेध्यबोधाद्धि निषेध्यबाधः ॥ ९३ ॥

तदा तदीयं शरणं प्रपन्नः सिद्धान्तमश्रौषमनुद्धतात्मा ।
अदूदुषद्वैदिकमेव मार्गं तथागतो जातु कुशाग्रबुद्धिः ॥ ९४ ॥

तदाऽपतन्मे सहसाऽश्रुबिन्दुस्तच्चाविदुः पार्श्वनिवासिनोऽन्ये ।
तदाप्रभृत्येव विवेश शङ्का मय्याप्तभावं परिहृत्य तेषाम् ॥ ९५ ॥

विपक्षपाठी बलवान् द्विजातिः प्रत्यादद्दर्शनमस्मदीयम् ।
उच्चाटनीयः कथमप्युपायैर्नैतादृशः स्थापयितुं हि योग्यः ॥ ९६ ॥

संमन्त्र्य चेत्थं कृतनिश्चयास्ते ये चापरेऽहिंसनवादशीलाः ।
न्यपातयन्नुच्चतरात् समस्तं मामग्रसौधाद्विनिपातभीरुम् ॥ ९७ ॥

पतन् पतन् सौधतलान्यरोरुहं यदि प्रमाणं श्रुतयो भवन्ति ।
जीवेयमस्मिन् पतितोऽसमस्थले मज्जीवने तच्छ्रुतिमानता गतिः ॥

यदीह सन्देहपदप्रयोगाद्व्याजेन शास्त्रश्रवणाच्च हेतोः ।
ममोच्चदेशात्पततो व्यनङ्क्षीत्तदेकचक्षुर्विधिकल्पना सा ॥ ९९ ॥

एकाक्षरस्यापि गुरुः प्रदाता शास्त्रोपदेष्टा किमु भाषणीयम् ।
अहं हि सर्वज्ञगुरोरधीत्य प्रत्यादिशे तेन गुरोर्महागः ॥ १०० ॥

तदेवमित्थं सुगतादधीत्य प्राघातयं तत्कुलमेव पूर्वम् ।
जैमिन्युपज्ञेऽभिनिविष्टचेताः शास्त्रे निरास्थं परमेश्वरं च ॥ १०१ ॥

दोषद्वयस्यास्य चिकीर्षुरर्हन् यथोदितां निष्कृतिमाश्रयाशम् ।
प्राविक्षमेषा पुनरुक्तभूता जाता भवत्पादनिरीक्षणेन ॥ १०२॥

भाष्यं प्रणीतं भवतेति योगिन्नाकर्ण्य तत्रापि विधाय वृत्तिम् ।
यशोऽधिगच्छेयमिति स्म वाञ्छा स्थिता पुरा संप्रति किं तदुक्त्या ॥

जाने भवन्तमहमार्यजनार्थजातमद्वैतरक्षणकृते विहितावतारम् ।
प्रागेव चेन्नयनवर्त्म कृतार्थदेशाः पापक्षयाय न तदेदमाचरिष्यम् ॥

प्रायोऽधुना तदुभयप्रभवाघशान्त्यै
प्राविक्षमार्य तुषपावकमात्तदीक्षः ।
भाग्यं न मेऽजनि हि शावरभाष्यवत्त्व-
द्भाष्येऽपि किंचन विलिख्य यशोऽधिगन्तुम् ॥ १०५ ॥

इत्यूचिवांसमथ भट्टकुमारिलं तमीषद्विकस्वरमुखाम्बुजमाह मौनी ।
श्रुत्यर्थकर्मविमुखान् सुगताञ्जिहन्तुं जातं गुहं भुवि भवन्तमहं तु जाने ॥

संभावनाऽपि भवतो न हि पातकस्य सत्यं व्रतं चरसि सज्जनशिक्षणाय ।
उज्जीवयामि करकाम्बुकणोक्षणेन भाष्येऽपि मे रचय वार्तिकमङ्ग भव्यम् ॥

इत्यूचिवांसं विबुधावतंसं स धर्मविद् ब्रह्मविदां वरेण्यम् ।
विद्याधनः शान्तिधनाग्रगण्यं सप्रश्रयं वाचमुवाच भूयः ॥ १०८ ॥

नार्हामि शुद्धमपि लोकविरुद्धकृत्यं
कर्तुं मयीद्य महितोक्तिरियं तवार्हा ।
आजानतोऽतिकुटिलेऽपि जने महान्त-
स्त्वारोपयन्ति हि गुणं धनुषीव शूराः ॥ १०९ ॥

संजीवनाय चिरकालमृतस्य च त्वं
शक्तोऽसि शङ्कर दयोर्मिलदृष्टिपातैः ।
आरब्धमेतदधुना व्रतमागमोक्तं
मुञ्चन् सतां न भविताऽस्मि सुधाविनिन्द्यः ॥ ११० ॥

जाने तवाहं भगवन् प्रभावं संहृत्य भूतानि पुनर्यथावत् ।
स्रष्टुं समर्थोऽसि तथाविधो मामुज्जीवयेश्चेदिह किं विचित्रम् ॥ १११ ॥

नाभ्युत्सहे किन्तु यतिक्षितीन्द्र सङ्कल्पितं हातुमिदं व्रताग्र्यम् ।
तद्तारकं देशिकवर्य मह्यमादिश्य तद्ब्रह्म कृतार्थयेथाः ॥ ११२ ॥

इति श्रीमाधवीये तद्व्याससंदर्शनचित्रगः ।
संक्षेपशङ्करजये सर्गोऽसौ सप्तमोऽभवत् ॥

(आदितः श्लोकाः—७८४)

---

## ॥ अष्टमः सर्गः ॥

---

### (श्रीमदाचार्यमण्डनमिश्रसंवादः)

अथ प्रतस्थे भगवान् प्रयागाच्चं मण्डनं पण्डितमाशु जेतुम् ।
गच्छन् खमुत्या पुरमालुलोके माहिष्मतीं मण्डनमण्डितां सः ॥ १ ॥

अवातरद्रत्नविचित्रवप्रां विलोक्य तां विस्मितमानसोऽसौ ।
पुराणवत्पुष्करवर्तनीतः पुरोपकण्ठस्थवने मनोज्ञे ॥ २ ॥

प्रफुल्लराजीववने विहारी तरङ्गरिङ्खत्कणशीकरार्द्रः ।
रेवामरुत्कम्पितसालमालः श्रमापहृद् भाष्यकृतं सिषेवे ॥ ३ ॥

तस्मिन् स विश्रम्य कृताह्निकः सन् स्वव्यक्तिकारोहणशालिनीने ।
गच्छन्नसौ मण्डनपण्डितौको दासीस्तदीयाः स ददर्श मार्गे ॥ ४ ॥

कृतालयो मण्डनपण्डितस्येत्येताः स पप्रच्छ जलाय गन्त्रीः ।
ताश्चापि दृष्ट्वाऽद्भुतशङ्करं तं सन्तोषवत्यो ददुरुत्तरं स्म ॥ ५ ॥

स्वतःप्रमाणं परतः प्रमाणं कीराङ्गना यत्र गिरं गिरन्ति ।
द्वारस्थनीडान्तरसंनिरुद्धा जानीहि तन्मण्डनपण्डितौकः ॥ ६ ॥

फलप्रदं कर्म फलप्रदोऽजः कीराङ्गना यत्र गिरं गिरन्ति ।
द्वारस्थनीडान्तरसंनिरुद्धा जानीहि तन्मण्डनपण्डितौकः ॥ ७ ॥

जगद् ध्रुवं स्याज्जगदध्रुवं स्यात्कीराङ्गना यत्र गिरं गिरन्ति।
द्वारस्थनीडान्तरसंनिरुद्धा जानीहि तन्मण्डनपण्डितौकः॥ ८॥

पीत्वा तदुक्तीरथ तस्य गेहाद्गत्वा बहिः सन्नकवाटगुप्तम्।
दुर्वेशमालोच्य स योगशक्त्या व्योमाध्वनाऽवातरदङ्गणान्तः॥ ९॥

तदा स लेखेन्द्रनिकेतनाभं स्फुरन्मरुच्चञ्चलकेतनाभम्।
समग्रमालोकत मण्डनस्य निवेशनं भूतलमण्डनस्य॥ १०॥

सौधाग्रसंछन्ननभोवकाशं प्रविश्य तत्प्राप्य कवेः सकाशम्।
विद्याविशेषात्तयशःप्रकाशं ददर्श तं पद्मजसंनिकाशम्॥ ११॥

तपोमहिम्नैव तपोनिधानं सजैमिनिं सत्यवतीतनूजम्।
यथाविधि श्राद्धविधौ निमन्त्र्य तत्पादपद्मान्यवनेजयन्तम्॥ १२॥

तत्रान्तरिक्षादवतीर्य योगिवर्यः समागम्य यथार्हमेषः।
द्वैपायनं जैमिनिमप्युभाभ्यां ताभ्यां सहर्षं प्रतिनन्दितोऽभूत्॥ १३॥

अथ द्युमार्गादवतीर्णमन्तिके मुन्योः स्थितं ज्ञानशिखोपवीतिनम्।
संन्याससाम्राज्यगतस्य सोऽभवत्प्रवृत्तिशास्त्रैकरतोऽपि कोपनः॥ १४॥

तदाऽग्निरुद्धस्य गृहाश्रमैकनिष्ठेर्धवीश्वरस्यापि कुतूहलं मुहुः।
क्रमात्किमर्थं मुखवस्त्रधारतया: प्रश्नोत्तराण्यासुरथोत्तरोत्तरम्॥ १५॥

कुतो मुण्ड्यागलान्मुण्डी पन्थास्ते पृच्छ्यते मया।
किमाह पन्थास्त्वन्माता मुण्डेत्याह तथैव हि॥ १६॥

पन्थानं त्वमपृच्छस्त्वां पन्थाः प्रत्याह मण्डन।
त्वन्मातेत्यत्र शब्दोऽयं न मां ब्रूयादपृच्छकम्॥ १७॥

अहो पीता किमु सुरा नैव श्वेता यतः स्मर।
किं त्वं जानासि तद्वर्णमहं वर्णं भवान् रसम्॥ १८॥

मत्तो जातः कलञ्जाशी विपरीतानि भाषते ।
सत्यं ब्रवीति पितृवच्चत्तो जातः कलञ्जभुक् ॥ १९ ॥

कन्थां वहसि दुर्बुद्धे गर्दभेनापि दुर्वहाम् ।
शिखायज्ञोपवीताभ्यां कस्ते भारो भविष्यति ॥ २० ॥

कन्थां वहामि दुर्बुद्धे तव पित्रापि दुर्वहाम् ।
शिखायज्ञोपवीताभ्यां श्रुतेर्भारो भविष्यति ॥ २१ ॥

त्यक्त्वा पाणिगृहीतीं स्वामशक्त्या परिरक्षणे ।
शिष्यपुस्तकभारेच्छोर्व्याख्याता ब्रह्मनिष्ठता ॥ २२ ॥

गुरुशुश्रूषणालस्यात्समावर्त्य गुरोः कुलात् ।
स्त्रियः शुश्रूषमाणस्य व्याख्याता कर्मनिष्ठता ॥ २३ ॥

स्थितोऽसि योषितां गर्भे ताभिरेव विवर्धितः ।
अहो कृतघ्न मूर्ख कथं ता एव निन्दसि ॥ २४ ॥

यासां स्तन्यं त्वया पीतं यासां जातोऽसि योनितः ।
तासु मूर्खतम स्त्रीषु पशुवद्रमसे कथम् ॥ २५ ॥

वीरहत्यामवाप्तोऽसि वह्नीनुद्वास्य यत्नतः ।
आत्महत्यामवाप्तस्त्वमविदित्वा परं पदम् ॥ २६ ॥

दौवारिकान् वञ्चयित्वा कथं स्तेनवदागतः ।
भिक्षुभ्योऽन्नमदत्त्वा त्वं स्तेनवद्भोक्ष्यसे कथम् ॥ २७ ॥

कर्मकाले न संभाष्य अहं मूर्खेण संप्रति ।
अहो प्रकटितं ज्ञानं यतिभङ्गेन भाषिणा ॥ २८ ॥

यतिभङ्गे प्रवृत्तस्य यतिभङ्गो न दोषभाक् ।
यतिभङ्गे प्रवृत्तस्य पश्यन्त्वं समस्तताम् ॥ २९ ॥

क्व ब्रह्म क्व च दुर्मेधाः क्व संन्यासः क्व वा कलिः ।
स्वाद्वन्नभक्षकामेन वेषोऽयं योगिनां धृतः ॥ ३० ॥

क्व स्वर्गः क्व दुराचारः क्वाग्निहोत्रं क्व वा कलिः ।
मन्ये मैथुनकामेन वेषोऽयं कर्मिणां धृतः ॥ ३१ ॥

इत्यादिदुर्वाक्यगणं ब्रुवाणे रोषेण साहंकृतिविश्वरूपे ।
श्रीशङ्करे वक्तरि तस्य तस्योत्तरं च कौतूहलवच्च चारु ॥ ३२ ॥

तं मण्डनं सस्मितजैमिनीक्षितं व्यासोऽब्रवीज्जल्पसि वत्स दुर्वचः ।
आचारणा नेयमनिन्दितात्मनां ज्ञातात्मतत्त्वं यमिनां धुर्तपिणम् ॥

अभ्यागतोऽसौ स्वयमेव विष्णुरित्येव मत्वाऽऽशु निमन्त्रय त्वम् ।
इत्याश्रवं ज्ञातविधिं प्रतीतं सुभ्यगीः साध्वशिषन्मुनिस्तम् ॥ ३४ ॥

अथोपसंस्पृश्य जलं स शान्तः ससंभ्रमं मण्डनपण्डितोऽपि ।
व्यासाज्ञया शास्त्रविदर्चयित्वा न्यमन्त्रयद्भैक्ष्यकृते महर्षिम् ॥ ३५ ॥

स चाब्रवीत्सौम्य विवादभिक्षामिच्छन् भवत्संनिधिमागतोऽस्मि ।
साऽन्योन्यशिष्यत्वपणा प्रदेया नास्त्यादरः प्राकृतभक्तभैक्ष्ये ॥ ३६ ॥

मम न किंचिदपि ध्रुवमीप्सितं श्रुतिशिरःपथविस्तृतिमन्तरा ।
अवहितेन मखेष्वनधीरितः स भवता भवतापहिमद्युतिः ॥ ३७ ॥

जगति संप्रति तं प्रथयाम्यहं समभिभूय समस्तविवादिनम् ।
त्वमपि संश्रय मे मतमुत्तमं विगद वा वद माऽसि जितस्त्विति ॥

इति यतिप्रवरस्य निशम्य तद्वचनमर्थवदागतविस्मयः ।
परिभवेन नवेन महायशाः स निजगौ निजगौरवमास्थितः ॥ ३९ ॥

अपि सहस्रमुखे फणिनायके न विजितस्त्विति जातु फणत्ययम् ।
न च विहाय मतं श्रुतिसंमतं मुनिमते निपतेत्परिकल्पिते ॥ ४० ॥

अपि कदाचिदुदेष्यति कोविदः सरसवादकथाऽपि भविष्यति ।
इति कुतूहलिनो मम सर्वदा जयमहोऽयमहो स्वयमागतः ॥ ४१ ॥

भवतु संप्रति वादकथाऽऽवयोः फलतु पुष्कलशास्त्रपरिश्रमः ।
उपनता स्वयमेव न गृह्यते नवसुधा वसुधावसथेन किम् ॥ ४२ ॥

अयमहं यमहन्तुरपि स्वयं शमयिता मयि तावकसद्गिराम् ।
सुकलहं कलहंसककलाभृतां दिश सुधांशुसुधामलसद्वचनो ॥ ४३ ॥

अपि तु दुर्हृदयस्मयकाननक्षतिकठोरकुठारधुरन्धरा ।
न पटुता मम ते श्रवणान्तिकं ननु गताऽनुगताखिलदर्शना ॥ ४४ ॥

अत्यल्पमेतद्भवतेरितं मुने भैक्ष्यं प्रकुर्वे यदि वाददित्सुता ।
गतोद्यमोऽहं श्रुतवादवार्तया चिरेप्सितेयं वदिता न कश्चन ॥ ४५ ॥

वादं करिष्यामि न संदिहेऽत्र जयाजयौ नौ वदिता न कश्चित् ।
न कण्ठशोषैकफलो विवादो मिथो जिगीषू कुरुतस्तु वादम् ॥ ४६ ॥

वादे हि वादिप्रतिवादिनौ द्वौ विपक्षपक्षग्रहणं विधत्तः ।
का नौ प्रतिज्ञा वदतोश्च तस्यां किं मानमिष्टं वद कः स्वभावः ॥ ४७ ॥

कः प्राश्निकोऽहं गृहमेधिसत्तमस्त्वं भिक्षुराजो वदतामनुत्तमः ।
जयाजयौ नौ सुपर्णा विधीयतां ततः परं साधु वदाव सुस्मितौ ॥ ४८ ॥

अथातिधन्योऽस्मि यदार्यपादो मया सहाभ्यर्थयते विवादम् ।
भविष्यते वादकथाऽपरेद्युर्माध्याह्निकं संप्रति कर्म कुर्याम् ॥ ४९ ॥

तथेति प्रोक्ते स्मितशङ्करेण भविष्यते वादकथा श्व एव ।
तत्साक्षिभावं भजतं मुनीन्द्रावित्यर्थयद्बादरिजैमिनी सः ॥ ५० ॥

विधाय भार्यां विदुषीं सदस्यां विधीयतां वादकथा सुधीन्द्र ।
इत्थं सरस्वत्यवतारताज्ञौ तद्धर्मपत्न्यास्तमभाषिषाताम् ॥ ५१ ॥

अथानुमोद्यामिदितं मुनिर्म्या स मण्डनार्यः प्रकृतं चिकीर्षुः ।
आनर्च दैवोपगतान्मुनीन्द्रानग्नीनिव त्रीन्मुनिशेखरांस्तान् ॥ ५२ ॥

भुक्त्वोपविष्टस्य मुनित्रयस्य श्रमापनोदाय तदीयशिष्यौ ।
अतिष्ठतां पार्श्वगतौ वटू द्वौ सचामरौ वीजनमाचरन्तौ ॥ ५३ ॥

अथ क्रियान्ते किल सूपविष्टास्त्रय्यन्तवेद्यार्थविदस्त्रयोऽमी ।
अमन्त्रयंश्चारु परस्परं ते मुहूर्तमात्रं किमपि प्रहृष्टाः ॥ ५४ ॥

तेषां द्विजेन्द्रालपनिर्गतानामदर्शनं जग्मतुरञ्जसा द्वौ ।
रेवातटे रम्यकदम्बजाले देवालयेऽन्त्रसितवांस्तृतीयः ॥ ५५ ॥

इति स यतिवरेभ्यो दैवयोगाद्गुरूणाम्
इतरजनदुरापं दर्शनं प्राप्य हृष्टः ।
तदुदितवचनानि श्रावयन्नात्मशिष्यान्
अनयदमृततुल्यान्यात्मविच्चां त्रियामाम् ॥ ५६ ॥

प्रातःशोणसरोजबान्धवरुचिप्रद्योतिते व्योमनि
प्रख्यातः स विधाय कर्म नियतं प्रज्ञावतामग्रणीः ।
सार्कं शिष्यवरैः प्रपद्य सदनं सन्मण्डितं माण्डनं
वादायोपविवेश पण्डितसभामध्ये मुनिर्ध्येयवित् ॥ ५७ ॥

ततः समादिश्य सदस्यतायां सधर्मिणीं मण्डनपण्डितोऽपि ।
स शारदां नाम समस्तविद्याविशारदां वादसमुत्सुकोऽभूत् ॥ ५८ ॥

पत्या नियुक्ता पतिदेवता सा सदस्यभावे सुदती चकासे ।
तयोर्विवेक्तुं गुणतारतम्यं समागता संसदि भारतीव ॥ ५९ ॥

प्रवृद्धवादोन्मुखयोः तदीयां विज्ञाय विज्ञः प्रथमं यतीन्द्रः ।
परावरज्ञः स परावरज्ञपरां प्रतिज्ञामकरोत्स्वकीयाम् ॥ ६० ॥

ब्रह्मैकं परमार्थसच्चिदमलं विश्वप्रपञ्चात्मना
शुक्ती रूप्यपरात्मनेव बहलाज्ञानावृतं भासते ।
तज्ज्ञानान्निखिलप्रपञ्चनिलया स्वात्मव्यवस्था परं
निर्वाणं जनिमुक्तमभ्युपगतं मानं श्रुतेर्मस्तकम् ॥ ६१ ॥

वादे जये यदि पराजयभागहं स्यां संन्यासमङ्ग परिहृत्य कषायचेलम् ।
शुक्लं वसीय वसनं द्वयभारतीयं वादे जयाजयफलप्रतिदीपिकाऽस्तु ॥

इत्थं प्रतिज्ञां कृतवत्युदारां श्रीशङ्करे भिक्षुवरे स्वकीयाम् ।
॥ विश्वरूपो गृहमेधिवर्यश्चक्रे प्रतिज्ञां स्वमतप्रतिष्ठाम् ॥ ६३ ॥

वेदान्ता न प्रमाणं चितिवपुषि पदे तत्र संगत्ययोगा-
त्पूर्वो भागः प्रमाणं पदचयगमिते कार्यवस्तुन्यशेषे ।
शब्दानां कार्यमात्रं प्रति समधिगता शक्तिरभ्युन्नतानां
कर्मभ्यो मुक्तिरिष्टा तदिह तनुभृतामाऽऽयुषः स्यात्समाप्तेः ॥ ६४ ॥

वादे कृतेऽस्मिन्यदि मे जयान्यस्त्वयोदितात्स्याद्विपरीतभावः ।
येयं त्वयाऽभूद्वदिता प्रसाऽस्ये जानाति चेत्सा भविता वधूर्मे ॥ ६५ ॥

जेतुः पराजित इहाश्रमनाददीतेत्येतौ मिथः कृतपणौ यतिविश्वरूपौ ।
अम्बामुदारधिषणामभिषिच्य साक्ष्ये जल्पं वितेनतुरथो जयदत्तदृष्टी ॥

आवश्यकं परिसमाप्य दिने दिने तौ
वादं समं व्यतनुतां किल सर्ववेदौ ।
एवं विजेतुमनसोरुपविष्टयोस्तां
मालां गले न्यधित सोभयभारतीयम् ॥ ६७ ॥

माला यदा मलिनभावमुपैति कण्ठे
यस्यापि तस्य विजयेतरनिश्चयः स्यात् ।

उक्त्वा गृहं गतवती गृहकर्मसक्ता
भिक्षाशनेऽपि चरितुं गृहिमस्करिभ्याम् ॥ ६८ ॥

अन्योन्यसंजयफले विहितादरौ तौ
वादं विवादपरिनिर्णयमातनिष्टाम्।
ब्रह्मादयः सुरवरा अपि वाहनस्थाः
श्रोतुं तदीयसदने स्थितवन्त ऊर्ध्वम् ॥ ६९ ॥

ततस्तयोरास महान्विवादः सदस्यविश्राणितसाधुवादः।
स्वपक्षसाक्षीकृतसर्ववेदः परस्परस्यापि कृतप्रमोदः ॥ ७० ॥

दिने दिने धाधिगतप्रकर्षो भूरीभवत्पण्डितसन्निकर्षः।
अन्योन्यभङ्गाहिततीव्रतर्षस्तथाऽपि दूरीकृतजन्यमर्षः ॥ ७१ ॥

दिने दिने वासरमध्यमे सा व्रते यति भोजनकालमेव।
समेत्य भिक्षुं समयं च मैक्ष्ये दिनान्यभूवन्निति पञ्चषाणि ॥ ७२ ॥

अन्योन्यमुत्तरमखण्डयतां प्रगल्भं
बद्धासनौ स्मितविकासिमुखारविन्दौ।
न स्वेदकम्पगगनेक्षणशालिनौ वा
न क्रोधवाक्छलमवादि निरुत्तराभ्याम् ॥ ७३ ॥

ततो यतिक्ष्माभृदवेक्ष्य दाक्ष्यं खेदक्षमं तस्य विचक्षणस्य।
चिक्षेप तं क्षोभितसर्वपक्षं विद्वत्समक्षाप्रतिमानकक्ष्यम् ॥ ७४ ॥

ततः स्वसिद्धान्तसमर्थनाय प्रागल्भ्यहीनोऽपि स सभ्यमुख्यः।
जगाद वेदान्तवचःप्रसिद्धमर्दनसिद्धान्तमपाकरिष्णुः ॥ ७५ ॥

भो भो यतिक्ष्माधिपते भवद्भिर्वैविषयोर्यत्नवमेकरूप्यम्।
विशुद्धमङ्गीक्रियते हि तत्र प्रमाणमेवं न वयं प्रतीमः ॥ ७६ ॥

स प्रत्यवादीदिदमेव मानं यच्छेनकेतुप्रमुखान्विनेयान् ।
उद्दालकाद्या गुरवो महान्तः संग्राहयन्त्यात्मतया परेशम् ॥ ७७ ॥

वेदावसानेषु हि तत्त्वमादिवचांसि जप्यान्यघमर्षणानि ।
हुंफण्मुखानीव वचांसि योगिन्नेषां विवक्षाऽस्ति कुहस्विदर्थे ॥ ७८ ॥

अर्थाप्रतीतौ किल हुंफडादेर्जपोपयोगित्वममाणि विज्ञैः ।
अर्थप्रतीतौ स्फुटमत्र सत्यां कथं भवेत्प्राज्ञ जपार्थतैव ॥ ७९ ॥

आपाततस्तत्त्वमसीति वाक्याद्यतीश जीवेश्वरयोरभेदः ।
प्रतीयतेऽथाऽपि मखादिकर्तृप्रशंसया स्याद्विधिशेष एव ॥ ८० ॥

क्रत्वङ्गयूपादिकमर्यमादिदेवात्मना वाक्यगणः प्रशंसन् ।
शेषः क्रियाकाण्डगतो यदि स्यात्काण्डान्तरस्थोऽपि भवेत्कथं सः ॥

तर्ह्यस्तु जीवे परमात्मदृष्टिविधायकः कर्मसमृद्धयेऽर्हन् ।
अब्रह्मणि ब्रह्मधियं विधत्ते यथा मनोऽब्रार्कनमस्वदादौ ॥ ८२ ॥

संश्रूयतेऽन्यत्र यथा लिङादिर्विधायको ब्रह्मविभावनाय ।
तथा विधेरश्रवणान्मनीषिन् संज्ञाघटीत्यत्र कथं विधानम् ॥ ८३ ॥

यद्वत्प्रतिष्ठाफलदर्शनेन विधिर्यतीनां वर रात्रिसत्रे ।
प्रकल्प्यते तद्वदिहापि मुक्तिफलश्रुतेः कल्पयितुं स युक्तः ॥ ८४ ॥

तर्हि क्रियाजन्यतया विमुक्तिः स्वर्गादिवद्धन्त विनश्वरा स्यात् ।
उपासना कर्तुमकर्तुमन्यथा वा कर्तुमर्हा मनसः क्रियैव ॥ ८५ ॥

मा भूदिदं तत्त्वमसीति वाक्यमुपासनापर्यवसायि कामम् ।
किन्त्वस्य जीवस्य परेण साम्यप्रत्यायकं सत्तम चोभवीतु ॥ ८६ ॥

किं चेतनत्वेन विवक्ति साम्यं सार्वज्ञ्यसार्वात्म्यमुखैर्गुणैर्वा ।
आद्ये प्रसिद्धं न स्वल्पदेयमन्ते स्वसिद्धान्तविरुद्धता स्यात् ॥ ८७ ॥

नित्यत्वमात्रेण मुने परात्मगुणोपमानैः सुखबोधपूर्वैः।
गुणैरविद्यावृतितोऽप्रतीतैः साम्यं मयीत्यस्य ततो न दोषः॥ ८८॥

यद्येवमेतस्य परत्वमेव प्रत्याययत्वत्र दुराग्रहः कः।
त्वयेव तस्य प्रतिभासशङ्का विद्वन्नविद्यावरणान्निरस्ता॥ ८९॥

मोक्षेऽस्तनत्वेन शरीरिसाम्यमावेद्यन्नामस्य जगत्प्रसूतेः।
चिदुत्थितत्वेन परोदितस्याप्यणुप्रधानप्रभृतेर्निरासः॥ ९०॥

इन्त्वैवमस्तीति तदा प्रयोगः स्यात्त्वन्मते तत्त्वमसीति न स्यात्।
तदैक्षतेत्यत्र जडत्वशङ्काव्यावर्तनाचात्र पुनर्न चोद्यम्॥ ९१॥

नन्वेवमप्यैक्यपरत्वमस्य प्रत्यक्षपूर्वप्रमितिप्रकोपात्।
न युज्यते तज्जपमात्रयोगित्वाध्यायविध्याश्रितमभ्युपेयम्॥ ९२॥

अक्षेण चेद्भेदमितिस्तदा स्यादभेदवादिश्रुतिवाक्यबाधः।
असंनिकर्षान्न भवेद्धि भेदप्रमैवं तेनास्य कुतो विरोधः॥ ९३॥

भिन्नोऽहमीशादिति भासते हि भेदस्य जीवात्मविशेषणत्वम्।
तत्संनिकर्षोऽस्त्वय सम्प्रयोगाभावेऽपि भेदेन्द्रिययोर्मनीषिन्॥ ९४॥

अतिप्रसक्तेर्न तु केवलस्य विशेषणत्वस्य तदभ्युपेयम्।
भेदाश्रये हीन्द्रियसंनिकृष्टे न संनिकृष्टत्वमिहात्मनोऽस्ति॥ ९५॥

भेदाश्रयात्मेन्द्रियसंनिकर्षो नेत्युक्तमेतच्चतुरं न यस्मात्।
विचात्मनोर्द्रव्यतया द्वयोरप्यस्त्येव संयोगसमाश्रयत्वम्॥ ९६॥

आत्मा विभुः स्यादथवाऽणुमात्रः संयोगिता नोभयथाऽपि युक्ता।
दृष्टा हि सा सावयवस्य लोके संयोगिता सावयवेन योगिन्॥ ९७॥

मनोऽक्षमित्यभ्युपगम्य भेदासक्तिस्त्वयुक्तं परमार्थतस्तु।
साहाय्यकृच्छ्रावणपूर्वकस्य दोषादवक्षेन्द्रियमेव चित्रम्॥ ९८॥

भेदप्रमा नेन्द्रियजाऽस्तु तर्हि साक्षिस्वरूपैव तथाऽपि योगिन् ।
तया विरोधात्परमात्मजीवाभेदं कथं बोधयितुं प्रमाणम् ॥ ९९ ॥

प्रत्यक्षमात्मेश्वरयोरविद्यामायायुजोर्द्योतयति प्रभेदम् ।
श्रुतिस्तयोः केवलयोरभेदं भिन्नाश्रयत्वान्न तयोर्विरोधः ॥ १०० ॥

स्याद्वा विरोधस्तदपि प्रवृत्तं प्रत्यक्षमग्रेऽबलमेव बाध्यम् ।
प्राबल्यवत्या चरमप्रवृत्त्या श्रुत्याऽपच्छेदनयोक्तरीत्या ॥ १०१ ॥

नन्वेवमप्यस्त्यनुमानबाधोऽभेदश्रुतेः संयमिचक्रवर्तिन् ।
घटादिवद्ब्रह्मनिरूपितेन भेदेन युक्तोऽयमसर्वविच्त्वात् ॥ १०२ ॥

किमेष भेदः परमार्थभूतः प्रसाध्यते काल्पनिकोऽथवाऽऽद्ये ।
दृष्टान्तहानिश्चरमे तु विद्वन्नङ्गीकृतोऽस्माभिरसाधनीयः ॥ १०३ ॥

स्वप्रत्ययाबाध्यभिदाश्रयत्वं साध्यं घटादौ च तदस्ति योगिन् ।
त्वयाऽऽत्मबोधेन भिदा न बाध्येत्यनभ्युपेतेति न कोऽपि दोषः ॥

ननु त्वशब्देन सुखादिमान्वा विवक्षितस्तद्विधुरोऽथवाऽऽत्मा ।
आद्येऽस्मदिष्टं न तु साध्यमन्त्ये दृष्टान्तहानिः पुनरेव ते स्यात् ॥

योगिन्ननौपाधिकभेदवत्त्वं विवक्षितं साध्यमिह त्वदिष्टः ।
औपाधिकस्त्वीश्वरजीवभेदो घटेशभेदो निरुपाधिकश्च ॥ १०६ ॥

घटेशभेदेऽप्युपाधिर्विद्या तथाऽनुमानेषु जडत्वमेव ।
चित्त्वादभिन्नः परवत्परस्मादात्मेति वाऽत्र प्रतिपक्षहेतुः ॥ १०७ ॥

धर्मिप्रमाबाध्यशरीरिभेदो घटस्तथा ब्रह्मणि साध्यमिष्टम् ।
त्वयेष्यते ब्रह्मधियाऽऽत्मभेदो बाध्यो घटादिप्रमया त्वबाध्यः ॥

किं कृत्स्नधर्मिप्रमया न बाध्यः किं वा स यत्किंचनधर्मिबोधात् ।
घटादिके ब्रह्मणि चात्मभेदस्यैक्यात् पुनः स्यान्ननु पूर्वदोषः ॥ १०९ ॥

किंचागुणो वा सगुणो मनीषिन्विवक्ष्यते धर्मिपदेन नान्त्यः ।
भेदस्य तद्बुद्ध्यविबाध्यतेष्टेर्नाद्यश्च तत्रोभयथाऽपि दोषात् ॥ ११० ॥

किं निर्विशेषं प्रमितं न वाऽन्त्ये प्राप्ताऽऽश्रयासिद्धिरथाद्यकल्पे ।
शरीरभेदेन परस्य सिद्धेः प्राप्नोति धर्मिग्रहमानकोपः ॥ १११ ॥

नो 'द्वा सुपर्णा सयुजा सखाये'त्याद्या श्रुतिर्भेदमुदीरयन्ती ।
जीवेशयोः पिप्पलभोक्त्रभोक्त्रोस्तयोरभेदश्रुतिबाधिकाऽस्तु ॥ ११२ ॥

प्रत्यक्षसिद्धे विफले परात्मभेदे श्रुतिर्नो नयविप्रमाणम् ।
स्यादन्यथा मानमतत्परोऽपि स्वार्थेऽर्थवादः सकलोऽपि विद्वन् ॥

स्मृतिप्रसिद्धार्थविरोधि वाक्यं यथेष्यते मूलतया प्रमाणम् ।
प्रत्यक्षसिद्धार्थकवाक्यमेवं स्यादेव तन्मूलतया प्रमाणम् ॥ ११४ ॥

श्रुतिः स्मृतेऽर्थे यदि वेदविद्भिर्भवेन्न तन्मूलतया प्रमाणम् ।
कथं भवेद्वेदकथानभिज्ञैर्ज्ञातेऽपि भेदे परजीवयोः सा ॥ ११५ ॥

जीवेश्वरौ सा वदतीत्युपेत्य प्रावोचमेतत्परमार्थतस्तु ।
विविच्य सत्त्वात्पुरुषं समस्तसंसारराहित्यममुष्य वक्ति ॥ ११६ ॥

यदीयमाख्यात्यथ सत्त्वजीवौ विहाय सर्वज्ञशरीरभाजौ ।
जडस्य भोक्तृत्वमुदाहरन्ती प्रामाण्यमर्हेन्न् कथमश्नुवीत ॥ ११७ ॥

न चोदनीया वयमत्र विद्वन् यतस्त्वया पैङ्गिरहस्यमेव ।
अत्तीति सत्त्वं त्वभिपश्यतीज्ञ इति स्म सम्याग्वृणोति मन्त्रम् ॥

शारीरवाची ननु सत्त्वशब्दः क्षेत्रज्ञशब्दः परमात्मवाची ।
तत्राप्यतो नान्यपरत्वमस्य वाक्यस्य पैङ्ग्योदितवर्त्मनाऽपि ॥ ११९ ॥

तदेतदित्यादिगिरा हि चित्ते प्रदर्शिता सत्त्वपदस्य वृत्तिः ।
क्षेत्रज्ञशब्दस्य च वृत्तिरुक्ता शारीरके द्रष्टरि तत्र विद्वन् ॥ १२० ॥

येनेति हि स्वप्नदृशिक्रियायाः कर्तोच्यते तत्र स जीव एव ।
क्षेत्रज्ञशब्दाभिहितश्च योगिन् स्यात्स्वप्नदृक् सर्वविदीश्वरोऽपि ॥ १२१ ॥

तिङ्प्रत्ययेनाभिहितोऽत्र कर्ता ततस्तृतीया करणेऽभ्युपेया ।
द्रष्टा च शारीरतया मनीषिन् विशेष्यते तेन स नेश्वरः स्यात् ॥१२२॥

वृत्तिः शरीरे भवतीत्यमुष्मिन्नर्थे हि शारीरपदस्य योगिन् ।
तस्मिन् भवन् सर्वगतो महेशः कथं न शारीरपदाभिधेयः ॥ १२३ ॥

भवन् शरीरादितरत्र चेशः कथं च शारीरपदाभिधेयः ।
नभः शरीरेऽपि भवत्यथापि न केऽपि शारीरमितीरयन्ति ॥ १२४ ॥

यद्येष मन्त्रोऽनभिधाय जीवप्राज्ञौ वदेद्बुद्धिशरीरभाजौ ।
अत्तीति भोक्तृत्वमचेतनाया बुद्धेर्वदेत्तर्हि कथं प्रमाणम् ॥ १२५ ॥

अदाहकस्याप्ययसः कृशानोराश्लेषणाद्दाहकता यथाऽऽस्ते ।
तथैव भोक्तृत्वमचेतनाया बुद्धेरपि स्याच्चिदनुप्रवेशात् ॥ १२६ ॥

छायातपौ यद्वदतीव भिन्नौ जीवेश्वरौ तद्वदिति ब्रुवाणा ।
ऋतं पिबन्ताविति काठकेषु श्रुतिस्त्वभेदश्रुतिबाधिकाऽस्तु ॥ १२७ ॥

भेदं वदन्ती व्यवहारसिद्धं न बाधतेऽभेदपरश्रुतिं सा ।
एषा त्वपूर्वार्थतया बलिष्ठा भेदश्रुतेः प्रत्युत बाधिका स्यात् ॥ १२८ ॥

मानान्तरोपोद्बलिता हि भेदश्रुतिर्बलिष्ठा यमिनां वरेण्य ।
तद्बाधितुं सा प्रभवत्यभेदश्रुतिं प्रमाणान्तरबाधितार्थाम् ॥ १२९ ॥

प्राबल्यमापादयति श्रुतीनां मानान्तरं नैव बुधाग्रयायिन् ।
गतार्थतादानमुखेन तासां दौर्बल्यसम्पादकमेव किन्तु ॥ १३० ॥

इत्याद्या दृढयुक्तिरस्य शुशुभे दत्तानुमोदा गिरां
देव्या वादकृतिश्रुतरूपरमसावष्टम्भमुद्रिधया ।

भर्तुर्न्यासविलक्ष्यसूक्तिजननीसाक्षित्वकुक्षिंभरिः
सश्लाघाद्भुतपुष्पवृष्टिलहरीसौगन्ध्यपाणिन्धया ॥ १३१ ॥

इत्थं यतिक्षितिपतेरनुमोद्य युक्तिं मालां च मण्डनगले मलिनामवेक्ष्य ।
भिक्षार्थमुच्चलतमद्य युवामितीमावाचष्ट तं पुनरुवाच यतीन्द्रमम्बा ॥

कोपातिरेकवशतः शपता पुरा मां दुर्वाससा तदवधिर्विहितो जयस्ते ।
साऽहं यथागतमुपैमि शमिप्रवीरेत्युक्त्वा ससंभ्रममसुं निजधाम यान्तीम् ॥

ववन्ध निःशङ्कमरण्यदुर्गामन्त्रेण तां जेतुमना मुनीन्द्रः ।
जयोऽपि तस्याः स्वमतैकसिद्ध्यै सार्वज्ञतः स्वस्य न मानहेतोः ॥

जानामि देवीं भवतीं विधातुर्देवस्य भार्यां पुरभित्सगर्भ्याम् ।
उमाचलक्ष्म्यादिविचित्ररूपां गुप्त्यै प्रपञ्चस्य कृतावताराम् ॥ १३५ ॥

व्रज जननि तदा त्वं भक्तचूडामणिस्ते
निजपदमनुदास्याम्यर्थ्यनुज्ञां यदेतुम् ।
इति निजवचनेऽस्मिञ्छारदासंमतेऽसौ
मुनिरथ मुदितोऽभून्माण्डनं हृद्बुभुत्सुः ॥ १३६ ॥

इति श्रीमाधवीये तन्मण्डनार्यकथापरः ।
संक्षेपशङ्करजये सर्गोऽसावष्टमोऽभवत् ॥

( आदितः श्लोकाः–९२० )

## ॥ नवमः सर्गः ॥

### ( श्रीमदाचार्यसरस्वतीसंवादः )

अथ संयमिक्षितिपतेर्वचनैर्निगमार्थनिर्णयकरैः सनयैः ।
शमिताग्रहोऽपि पुनरप्यवदत् कृतसंशयः सपदि कर्मजडः ॥ १ ॥

यतिराज संप्रति ममाभिनवात्र विषादितोऽस्म्यपजयादपि तु ।
अपि जैमिनीयवचनान्यहहोन्मथितानि हीति भृशमस्मि कृशः ॥ २ ॥

स हि वेत्त्यनागतमतीतमपि प्रियकृत्समस्तजगतोऽधिकृतः ।
निगमप्रवर्तनविधौ स कथं तपसां निधिर्वितथवाग्रपदः ॥ ३ ॥

इति संदिहानमवदत्तमसौ न हि जैमिनावपनयोऽस्ति मनाक् ।
प्रमिमीमहे न वयमेव मुनेर्हृदयं यथावदनभिज्ञतया ॥ ४ ॥

यदि विद्यते कविजनाविदितं हृदयं मुनेस्तदिह वर्णय भोः ।
यदि युक्तमत्र भवता कथितं हृदि कुर्महे दलदहंकृतयः ॥ ५ ॥

अभिमंविमानपि परे विषयप्रसरन्मतीननुजिघृक्षुरसौ ।
तदवाप्तिसाधनतया सकलं सुकृतं न्यरूपयदिति स्म परम् ॥ ६ ॥

वचनं तमेतमिति धर्मचयं विदधाति बोधजननिहेतुतया ।
तदपेक्षयैव स च मोक्षपरो निरचारयत्न परथेति वयम् ॥ ७ ॥

श्रुतयः क्रियार्थकतया सफला अतदर्थकानि तु वचांसि वृथा ।
इति सूत्रयन्नु कथं मुनिराडपि सिद्धवस्तुपरतां मनुते ॥ ८ ॥

श्रुतिरायिरद्वयपरोऽपि परम्परयाऽऽत्मबोधफलकर्मणि च ।
प्रसरत्यदाद इति कार्यपरत्वमसूचि तत्प्रकरणस्थगिराम् ॥ ९ ॥

ननु मथिदात्मपरताऽभिमता यदि कृत्स्नवेदनिचयस्य मुनेः।
फलदातृतामपुरुषस्य वदन् स कथं निराह परमेशमपि ॥ १० ॥

ननु कर्तृपूर्वकमिदं जगदित्यनुमानमागमवचांसि विना।
परमेश्वरं प्रथयति श्रुतयस्त्वनुवादमात्रमिति काणभुजाः ॥ ११ ॥

न कथंचिदौपनिषदं पुरुषं मनुते बृहन्तमिति वेदवचः।
कथयत्यवेदविदगोचरतां गमयेत् कथं तमनुमानमिदम् ॥ १२ ॥

इति भावमात्मनि निधाय मुनिः स निराकरोन्निशितयुक्तिशतैः।
अनुमानमीश्वरपरं जगतः प्रभवं लयं फलमपीश्वरतः ॥ १३ ॥

तदिहास्मदुक्तविधया निपदा न विरुद्धमण्वपि मुनेर्वचसि।
इति गूढभावमनवेक्ष्य बुधास्तमनीशवाद्यमिति ब्रुवते ॥ १४ ॥

किमु तावतैव स निरीश्वरवाद्यभवत् परात्मविदुषां प्रवरः।
न निशाटनाहिततमः कंचिदप्यहनि प्रभां मलिनयेत्तरणेः ॥ १५ ॥

इति जैमिनीयवचसां हृदयं कथितं निशम्य यतिकेसरिणा।
मनसा ननन्द कविराण्णितरां सहशारदाश्च सदसस्पतयः ॥ १६ ॥

विदिताशयोऽपि परिवर्तिमनाग्विशयः स जैमिनिमचाप हृदा।
अवगन्तुमस्य वचसाऽपि पुनः स च संस्मृतः सविधमाप कवेः ॥

अवदच्च मृष्विति स भाष्यकृति प्रजहाहि संशयमिमं सुमते।
यदवोचदेष मम सूत्रततेर्हृदयं तदेव मम नापरथा ॥ १८ ॥

न ममैव वेद हृदयं यमिराडपि तु श्रुतेः सकलशास्त्रततेः।
यदभूद्भविष्यति भवत्तदपि ह्ययमेव वेद न तथा त्वितरः ॥ १९ ॥

गुरुणा चिदेकरसतत्परता निरणायि हि श्रुतिशिरोवचसाम्।
कथमेकसूत्रमपि तद्विमतं कथयाम्यहं तदुपसादितधीः ॥ २० ॥

अलमाकलय्य विशयं सुयशः शृणु मे रहस्यमिममेव परम् ।
त्वमवेहि संसृतिनिमग्नजनोत्तरणे गृहीतवपुषं पुरुषम् ॥ २१ ॥

आद्ये सत्त्वमुनिः सतां वितरति ज्ञानं द्वितीये युगे
दत्तो द्वापरनामके तु सुमतिर्व्यासः कलौ शङ्करः ।
इत्येवं स्फुटमीरितोऽस्य महिमा शैवे पुराणे-यत-
स्तस्य त्वं सुमते मते त्वमतरेः संसारवार्धिं तरेः ॥ २२ ॥

इति बोधितद्विजवरोऽन्तरधान्मनसोपगुह्य यमिनामृषभम् ।
स च यायजूकपरिषत्प्रमुखः प्रणिपत्य शङ्करमवोचदिदम् ॥ २३ ॥

विदितोऽस्ति संप्रति भवाञ्जगतः प्रकृतिर्निरस्तसमतातिशयः ।
अवबोधमात्रवपुरप्यबुधोद्धरणाय केवलमुपात्ततनुः ॥ २४ ॥

यदेकमुदितं पदं यतिवर त्रयीमस्तकै-
स्तदस्य परिपालकस्त्वमसि तत्त्वमस्यायुधः ।
परं गलितसौगतप्रलपितान्धकूपान्तरे
पतत्कथमिवान्यथा प्रलयमद्य नापत्स्यते ॥ २५ ॥

प्रबुद्धोऽहं स्वप्नादिति कृतमतिः स्वप्नमपरं
यथा मूढः स्वप्ने कलयति तथा मोहवशगाः ।
विमुक्तिं मन्यन्ते कतिचिदिह लोकान्तरगतिं
हसन्त्येतान् दासास्तव गलितमायाः परगुरोः ॥ २६ ॥

मुहुर्धिग्धिग्भेदिप्रलपितविमुक्तिं यदुदयेऽप्य-
सारः संसारो विरमति न कर्तृत्वमुखरः ।
भृशं विद्वन्मोदे स्थिरतमविमुक्तिं त्वदुदितां
भयातीता येष निरवधिचिदानन्दलहरी ॥ २७ ॥

अविद्याराक्षस्या गिलितमखिलेशं परगुरो
पिचण्डं भित्त्वास्याः स्वरमयममुष्मादुदहरः ।
मृतां पश्यन् रक्षोयुवतिभिरमुष्य प्रियतमां
हनूमाँल्लोकेऽभ्यस्तव तु कियती स्यान्महितता ॥ २८ ॥

जगदीनिहन्ननवगम्य पुरा महिमानमीदृशमचिन्त्यमहम् ।
तव यत्पुराऽभवमसाम्प्रतमप्यखिलं क्षमस्व करुणाजलधे ॥ २९ ॥

कपिलाक्षपादकणभुक्प्रमुखा अपि मोहमीयुरमितप्रतिमाः ।
श्रुतिभावनिर्णयविधावितरः प्रभवेत्कथं परशिवांशभृते ॥ ३० ॥

समेतैरेतैः किं कपिलकणभुग्गौतमवच-
स्तमस्तोमैश्वेतोमलिनिमसमारम्भणचणैः ।
सुधाधारोद्गारप्रचुरभगवत्पादवदन-
प्ररोहद्व्याहारामृतकिरणपुञ्जे विजयिनि ॥ ३१ ॥

भिन्दानैर्देवभेदैरभिनयवचनैः सद्गवीभञ्जनोत्कै-
र्व्याप्ता सर्वेयमुर्वी क्व जगति भजतां कैव मुक्तिप्रसक्तिः ।
यद्वा सद्वादिराजा विजितकलिमला विष्णुतत्त्वानुरक्ता
उज्जृम्भन्ते समन्ताद्दिशि दिशि कतिनः किं तया चिन्तया मे ॥

कथमल्पबुद्धिविवृतिप्रचयप्रबलोरगक्षतिहताः श्रुतयः ।
न यदि त्वदुक्त्यमृतसेकहृता विहरेयुरात्मविवृतानुशयाः ॥ ३३ ॥

भवदुक्तसूक्त्यमृतमानुकरा न चरेयुरार्य यदि कः शमयेत् ।
अतितीव्रदुःसहभवोष्णकरप्रचुरातपप्रभवतापमिमम् ॥ ३४ ॥

बत कर्मयन्त्रमधिरुह्य तपःश्रुतगेहदारसुतभृत्यधनैः ।
अतिरुद्धमानभरितः पतितो भवतोद्धृतोऽस्मि भवकूपबिलात् ॥ ३५ ॥

अहमाचरं बहु तपोऽसुकरं ननु पूर्वजन्मसु न चेदधुना ।
जगदीश्वरेण करुणानिधिना भवता कथा मम कथं घटते ॥ ३६ ॥

शान्तिप्राक्सुकृताङ्कुरं दमसमुल्लासोल्लसत्पल्लवं
वैराग्यद्रुमकोरकं सदनतावल्लीप्रसूनोत्करम् ।
ऐकाग्रीसुमनोमरन्दविसृतिं श्रद्धासमुद्यत्फलं
विन्देयं सुगुरोर्गिरां परिचयं पुण्यैरगण्यैरहम् ॥ ३७ ॥

त्रिदिवौकसामपि पुमर्थकरीमिह संसरज्जनविमुक्तिकरीम् ।
करुणोर्मिलां तव कटाक्षझरीमवगाहतेऽत्र खलु धन्यतमः ॥ ३८ ॥

केचिच्चञ्चललोचनाकुचतटीचेलाञ्चलोच्चालन-
स्पर्शद्राक्परिरम्भसंभ्रमकलालीलासु लोलाशयाः ।
सन्त्वेते कतिनस्तु निस्तुलयशःकोशादयः श्रीगुरु-
व्याहारक्षरितामृताब्धिलहरीदोलासु खेलन्त्यमी ॥ ३९ ॥

चिन्तासन्तानतन्तुग्रथितनवभवत्सूक्तिमुक्ताफलौघै-
रुद्यद्दंशयसद्यःपरिहृततिमिरैर्हारिणो हारिणोऽमी ।
सन्तः सन्तोषवन्तो यतिवर किमतो मण्डनं पण्डितानां
विघा ह्रिया स्वयं तान् शतमखमुखरान् वारयन्ती वृणीते ॥

सन्तः सन्तोपरोपं दधतु तव कृताम्नायशोभैर्यशोभिः
सौरालोकैरुलूका इव निखिलखला मोहमाहो वहन्तु ।
धीरश्रीशङ्करार्यप्रणतिपरिणतिभ्रश्यदन्तर्दुरन्त-
ध्वान्ताः सन्तो वयं तु प्रचुरतरनिजानन्दसिन्धौ निमग्नाः ॥

चिन्तासन्तानभागी पदसरसिजयोर्वन्दनं नन्दनं ते
सद्वरः कल्पवल्ली मनसि गुणतुतेर्वर्णना स्वर्णदीयम् ।

स्वर्गो दृग्गोचरस्त्वत्पदभजनमतः संविचार्येदमार्या
मन्यन्ते स्वर्गमन्यं तृणवदतिलघुं शङ्करार्य त्वदीयाः ॥ ४२॥

तदहं विसृज्य सुतदारगृहं द्रविणानि कर्म च गृहे विहितम् ।
शरणं वृणोमि भगवच्चरणावनुशाधि किङ्करममुं कृपया ॥ ४३ ॥

इति सूनृतोक्तिभिरुदीर्णगुणः सुधियाऽऽत्मवाननुजिघृक्षुरसौ ।
समुदैक्षतास्य सहधर्मचरीं विदिताशया मुनिमवोचत सा ॥ ४४ ॥

यतिपुण्डरीक तव वेद्मि मनो ननु पूर्वमेव विदितं च मया ।
इह मायि तापसमुखादखिलं तदुदीर्यते शृणु ससभ्यजनः ॥ ४५ ॥

मयि जातु मातुरुपकण्ठजुषि प्रभया तडिन्नतिभटोघजटः ।
सितभूतिरूषितसमस्ततनुः श्रमणोऽभ्ययादपरसूर्य इव ॥ ४६ ॥

परिगृह्य पाद्यमुखयाऽर्हणया रचिताञ्जलिर्नमितपूर्वतनुः ।
जननी तदाऽऽत्तवरिवस्यममुं मुनिमन्वयुङ्क्त मम भाव्यखिलम् ॥

भगवन्न वेद्मि दुहितुर्मम भाव्यखिलं च वेत्सि तपसा हि भवान् ।
प्रणते जने हि सुधियः कथयन्त्यपि गोप्यमार्यसदृशाः कृपया ॥

कियदायुराप्स्यति सुतान् कति वा दयितं कथंविधमुपैष्यति च ।
अथ च क्रतूनपि करिष्यति मे दुहिता प्रभूतधनधान्यवती ॥ ४९ ॥

इति पृष्टभाविचरितः प्रसुवा क्षणमात्रमीलितविलोचनकः ।
सकलं क्रमेण कथयन्निदमप्यपरं जगाद सुरहस्यमपि ॥ ५० ॥

निगमाध्वनि प्रचलनाय नतैरमरैरधिक्षिति खिले द्रुहिणः ।
पुनरुद्दिधीर्षुरवतीर्य खलु प्रतिभाति मण्डनकवीन्द्रमिषात् ॥ ५१ ॥

तमवाप्य रुद्रमिव साऽद्रिसुता दुहिता तवाच्युतमिवाब्धिसुता ।
अनुरूपमाहृतसमस्तमखा सतुना भविष्यति चिरं मुदिता ॥ ५२ ॥

अथ नष्टमौपनिषदं प्रबलैः कुमतैः कृतान्तमिह साधयितुम् ।
ननु मानुषं वपुरुपेत्य शिवः समलङ्करिष्यति धरां स्वपदैः ॥ ५३ ॥

सह तेन वादमुपगम्य चिरं दुहितुः पतिस्तु यतिवेषजुषा ।
विजितस्तमेव शरणं जगतां शरणं गमिष्यति विसृष्टगृहः ॥ ५४ ॥

इति गामुदीर्य स मुनिः प्रययौ सकलं यथातथमभूच्च मम ।
भवदीयशिष्यपदमस्य कथं वितथं भविष्यति मुनेर्वचसि ॥ ५५ ॥

अपि तु त्वयाऽद्य न समग्रजितः प्रथिताग्रणीर्मम पतिर्यदहम् ।
वपुरर्धमस्य न जिता मतिमन्नपि मां विजित्य कुरु शिष्यमिमम् ॥ ५६ ॥

यदपि त्वमस्य जगतः प्रभवो ननु सर्वविच्च परमः पुरुषः ।
तदपि त्वयैव सह वादकृते हृदयं बिभर्ति मम तुत्कलिकाम् ॥ ५७ ॥

इति यायजूकसहधर्मचरीकथितं वचोऽर्थवदगर्वपदम् ।
मधुरं निशम्य मुदितः सुतरां प्रतिवक्तुमैहत यतिप्रवरः ॥ ५८ ॥

यदवादि वादकलहोत्सुकतां प्रतिपद्यते हृदयमित्यचले ।
तदसांप्रतं न हि महायशसो महिलाजनेन कथयन्ति कथाम् ॥ ५९ ॥

स्वमतं प्रमेतुमिह यो यतते स वधूजनोऽस्तु यदि वाऽस्त्वितरः ।
यतितव्यमेव खलु तस्य जये निजपक्षरक्षणपरैर्भगवन् ॥ ६० ॥

अत एव गार्ग्यभिधया कलहं सह याज्ञवल्क्यमुनिराडकरोत् ।
जनकस्तथा सुलभयाऽचलया किममी भवन्ति न यशोनिधयः ॥ ६१ ॥

इति युक्तिमद्गदितमाकलयन्मुदितान्तरः श्रुतिसरिज्जलधिः ।
स तया विवादमधिदेवतया वचसामियेष विदुषां सदसि ॥ ६२ ॥

अथ सा कथा प्रववृते स्म तयोरुभयोः परस्परजयोत्सुकयोः ।
मतिचातुरीरचितशब्दझरी श्रुतिविस्मयीकृतविचक्षणयोः ॥ ६३ ॥

अनयोर्विचित्रपदयुक्तिभरैर्निशमय्य संकथनमाकलितम् ।
न फणीशमप्यतुलयन्न पर्षी न गुरुं कविं किमपरं जगति ॥ ६४ ॥

न दिवा न निश्यपि च वादकथा विरराम नैयमिककालमृते ।
इति जल्पतोः समयनल्पधियोर्दिवसाश्च सप्त दश चात्यगमन् ॥ ६५ ॥

अथ शारदाऽकृतकवाक्प्रमुखेष्वखिलेषु शास्त्रनिचयेषु परम् ।
तमजय्यमात्मनि विचिन्त्य मुनिं पुनरप्यचिन्तयदिदं तरसा ॥ ६६ ॥

अतिबाल्य एव कृतसंन्यसनो नियमैः परैरविधुरश्च सदा ।
मदनागमेष्वकृतबुद्धिरसौ तदनेन संप्रति जयेयमहम् ॥ ६७ ॥

इति संप्रधार्य पुनरप्यमुना कथने प्रसक्तमथ संगतितः ।
यमिनं सदस्यमुमपृच्छदसौ कुसुमास्त्रशास्त्रहृदयं विदुषी ॥ ६८ ॥

कलाः कियन्त्यो वद पुष्पधन्वनः किमात्मिकाः किंच पदं समाश्रिताः ।
पूर्वे च पक्षे कथमन्यथा स्थितिः कथं युवत्यां कथमेव पूरुषे ॥ ६९ ॥

नेतीरितः किञ्चिदुवाच शङ्करो विचिन्तयन्नत्र चिरं विचक्षणः ।
तासामनुक्तौ भविताऽल्पवेदिता भवेत्तदुक्तौ मम धर्मसंक्षयः ॥ ७० ॥

इति संविचिन्त्य स हृदाऽऽशु तदाऽनवबुद्धपुष्पशरशास्त्र इव ।
विदितागमोऽपि सुरिराड्यिषुर्नियमं जगाद जगति व्रतिनाम् ॥ ७१ ॥

इह मासमात्रमवधिः क्रियतामनुमन्यते हि दिवसस्य गणः ।
तदनन्तरं सुदति हारयसि भोः कुसुमास्त्रशास्त्रनिपुणत्वमपि ॥ ७२ ॥

उररीकृतं सति तथेति तयाऽऽक्रमते स्म योगिमृगराड् गगनम् ।
श्रुतविग्रहः श्रुतविनेययुतो दधदभ्रचारमथ योगदृशा ॥ ७३ ॥

स ददर्श कुत्रचिदमर्त्यमिव त्रिदिवच्युतं विगतसत्त्वमपि ।
मनुजेश्वरं परिवृतं प्रलपत्प्रमदाभिरार्तिमदमात्यजनम् ॥ ७४ ॥

अथो निशाखेटवशादटव्यां मूले तरोर्मोहशात्परासुम् ।
तं वीक्ष्य मार्गेऽमरुकं नृपालं सनन्दनं प्राह स संयमीन्द्रः ॥ ७५ ॥

सौन्दर्यसौभाग्यनिकेतसीमाः परःशता यस्य पयोरुहाक्ष्यः ।
स एष राजाऽमरुकाभिधानः शेते गतासुः श्रमतो धरण्याम् ॥ ७६ ॥

प्रविश्य कायं तमिमं परासोर्नृपस्य राज्येऽस्य सुतं निवेश्य ।
योगानुभावात्पुनरप्युपैतुमुत्कण्ठते मानसमस्मदीयम् ॥ ७७ ॥

अन्यादृशानामदसीयनानाकुरङ्गशावाक्षीकिलकिञ्चितानाम् ।
सर्वज्ञतानिर्वहणाय सोऽहं साक्षित्वमप्याश्रयितुं समीहे ॥ ७८ ॥

इत्यूचिवांसं यतितल्लजं तं सनन्दनः प्राह मतान्त्वमेनम् ।
सर्वज्ञ नैवाविदितं तवास्ति तथाऽपि भक्तिर्मुखरं तनोति ॥ ७९ ॥

मत्स्येन्द्रनामा हि पुरा महात्मा गोरक्षमादिश्य निजाङ्गगुप्त्यै ।
नृपस्य कस्यापि तनुं परासोः प्रविश्य तत्पत्तनमाससाद ॥ ८० ॥

भद्रासनाध्यासिनि योगिवर्ये भद्राण्यनिद्राण्यभवन्प्रजानाम् ।
ववर्ष कालेषु बलाहकोऽपि सस्यानि चाशास्यफलान्यभूवन् ॥ ८१ ॥

विज्ञाय विज्ञाः सचिवा नृपस्य काये प्रविष्टं कमपीह दिव्यम् ।
समादिशन् राजसरोरुहाक्षीः सर्वात्मना तस्य वशीक्रियायै ॥ ८२ ॥

सङ्गीतलास्याभिनयादिकेषु संसक्तचेता ललितेषु तासाम् ।
स एष विस्मृत्य मुनिः समाधिं सर्वात्मना प्राकृतवद्बभूव ॥ ८३ ॥

गोरक्ष एषोऽथ गुरोः प्रवृत्तिं विज्ञाय रक्षन् बहुधाऽस्य देहम् ।
निशान्तकान्तानटनोपदेष्टा नितान्तमस्यामवदन्तरङ्गः ॥ ८४ ॥

तत्रैकदा तत्त्वनिबोधनेन निवृत्तरागं निजदेशिकं सः ।
योगानुपूर्वीमुपदिश्य निन्ये यथापुरं प्राक्तनमेव देहम् ॥ ८५ ॥

हन्तेदृशोऽयं विषयानुरागः किंचोर्ध्वरेतोव्रतखण्डनेन।
किं नोदयेत्किल्बिषमुल्बणं ते कृत्यं भवानेव कृती विवेक्तुम्॥ ८६॥

व्रतमसदीयमतुलं क्व महद् क्व च कामशास्त्रमतिगर्ह्यमिदम्।
तदपीष्यते भगवतेव यदि ध्वनदस्थितं जगदिहैव भवेत्॥ ८७॥

अधिमेदिनि प्रथयितुं शिथिलं धृतकङ्कणस्य यतिधर्ममिमम्।
भवतः किमस्त्यविदितं तदपि प्रणयान्मयोदितमिदं भगवन्॥ ८८॥

स निशम्य पद्मचरणस्य गिरं गिरति स्म गीष्पतिसमप्रतिभः।
अविगीतमेव भवता फणितं शृणु सौम्य वच्मि परमार्थमिदम्॥ ८९॥

असङ्गिनो न प्रभवन्ति कामा हरेरिवाभीरवधूसखस्य।
वज्रोलियोगप्रतिभूः स एष वत्सावकीर्णित्वविपर्ययो नः॥ ९०॥

सङ्कल्प एवाखिलकाममूलं स एव मे नास्ति समस्य विष्णोः।
तन्मूलहानौ भवपाशनाशः कर्तुः सदा स्याद्भवदोपदष्टेः॥ ९१॥

अविचार्य यस्तु वपुरायहमित्यभिमन्यते जडमतिः सुदृढम्।
तमयुद्धतत्त्वमधिकृत्य विधिप्रतिषेधशास्त्रमखिलं सफलम्॥ ९२॥

कृतधीस्त्वनाश्रममवर्णमजात्यवबोधमात्रमजमेकरसम्।
स्वतयाऽवगत्य न भजेन्निगमस्य मूर्ध्नि विधिकिङ्करताम्॥ ९३॥

कलशादि मृत्प्रभवमस्ति यथा मृदमन्तरा न जगदेवमिदम्।
परमात्मजन्यमपि तेन विना समयत्रयेऽपि न समस्ति खलु॥ ९४॥

कथमज्यते जगदशोभमिदं कलयन्मृषेति हृदि कर्मफलैः।
न फलाय हि स्वपनकालकृतं सुकृतादि जाग्रति नृणां प्रियदम्॥ ९५॥

तदयं करोतु हयमेधशतान्यमितानि विप्रहननान्यथवा।
परमार्थविन्न सुकृतैर्दुरितैरपि लिप्यतेऽस्तमितकर्तृतया॥ ९६॥

अवधीत्त्रिशीर्षमददाच्च यतीन् वृकमण्डलाय कुपितः शतशः ।
न च लोमहानिरपि तेन कृता न शतक्रतोरिति हि बह्वृचगीः ॥ ९७ ॥

बहुदक्षिणैरयजत क्रतुभिर्विबुधानतर्पयदसंख्यधनैः ।
जनकस्तथाऽप्यभयमाप परं न तु देहयोगमिति काण्ववचः ॥ ९८ ॥

न विहीयतेऽहिरिपुवद्दुरितैर्न च वर्धते जनकवत्सुकृतैः ।
न स तापमेत्यकरवं दुरितं किमहं न साध्वकरवं त्विति च ॥ ९९ ॥

तदनङ्गशास्त्रपरिशीलनमप्यमुनैव सौम्य करणेन कृतम् ।
न हि दोषकृत्तदपि शिष्टसरण्यवनार्थमन्यवपुरेत्य यते ॥ १०० ॥

इति सत्कथाः स कथनीययशा भवभीतिभञ्जनकरीः कथयन् ।
सुदुरासदं चरणचारिजनैर्गिरिशृङ्गमेत्य पुनरेव जगौ ॥ १०१ ॥

अधिसानु पश्यत विभाति गुहा पुरतःशिला समतला विपुला ।
सरसी च तत्परिसरेऽच्छजला फलभारनम्रतरुरम्यतटा ॥ १०२ ॥

परिपाल्यतामिह वसद्भिरिदं वपुरप्रमादमनवद्यगुणाः ।
अहमास्थितस्तदुचितं करणं कलयामि यावदसमेषुकलाम् ॥ १०३ ॥

इति शिष्यवर्गमनुशास्य यमिप्रवरो विसृष्टकरणोऽधिगुहम् ।
महिपस्य वर्ष्म गुरुयोगबलोऽविशदातिवाहिकशरीरयुतः ॥ १०४ ॥

अङ्गुष्ठमारभ्य समीरणं नयन् करन्ध्रमार्गाद्बहिरेत्य योगवित् ।
करन्ध्रमार्गेण शनैः प्रविष्टवान् मृतस्य यावच्चरणाग्रमेकधीः ॥ १०५ ॥

गात्रं गतासोर्वसुधाधिपस्य शनैः समास्पन्दत हृत्प्रदेशे ।
तथोदमीलन्नयनं क्रमेण तयोदतिष्ठत्स यथा पुरेव ॥ १०६ ॥

आदौ तदङ्गमुदयन्मुखकान्ति पश्चाच्छ्वासान्तनिर्यदनिलं शनकैः परस्तात् ।
उन्मीलदक्षिचलनं तदनूयदक्षिण्याकोचमुत्थितमुपात्तबलं क्रमेण ॥

तं प्राप्तजीवमुपलभ्य पतिं प्रभूतहर्षस्वनाः प्रमुदिताननपङ्कजास्ताः ।
नार्यो विरेजुररुणोदयसंप्रफुल्लपद्माः ससारसरवा इव वारिजन्यः ॥

इत्थं तासामुदितमतुलं वीक्ष्य वामेक्षणानां
आत्तप्राणं नृपमपि महामात्यमुख्याः प्रहृष्टाः ।
दध्मुः शङ्खान् पणवपटहान् दुन्दुभींश्चाभिजघ्नु-
स्तेषां घोषाः सपदि बधिरीचक्रिरे द्यां भुवं च ॥ १०९ ॥

इति श्रीमाधवीये तत्सार्वज्ञ्योपायगोचरः ।
संक्षेपशङ्करजये सर्गोऽयं नवमोऽभवत् ॥

(आदितः श्लोकाः–१०२९)

## ॥ दशमः सर्गः ॥

### (राजदेहप्रवेशादिकथनम्)

अथ पुरोहितमन्त्रिपुरःसरैर्नरपतिः कृतशान्तिककर्मभिः ।
विहितमाङ्गलिकः स यथोचितं नगरमास्थितभद्रगजो ययौ ॥ १ ॥

समधिगम्य पुरं परिसान्त्वितप्रियजनः सचिवैः सह सम्मतैः ।
भुवमपालयदाहतशासनो नृपतिभिर्दिवमिन्द्र इवाधिराट् ॥ २ ॥

इति नृपत्वमुपेत्य वसुन्धरामवति संयमिभूभृति मन्त्रिणः ।
तमधिकृत्य परं कृतसंशया इति जजल्पुरनल्पधियो मिथः ॥ ३ ॥

मृतिमुपेत्य यथा पुनरुत्थितः प्रकृतिभाग्यवशेन तथा स्वयम् ।
नरपतिः प्रतिभाति न पूर्ववत्समुदिताखिलदिव्यगुणोदयः ॥ ४ ॥

वसु ददाति यथातिविदर्थिने वदति गीष्पतिवद्गिरमर्थवित् ।
जयति फाल्गुनवत्प्रतिपार्थिवान् सकलमप्यवगच्छति शर्ववत् ॥ ५ ॥

अनुसवनविसृत्वरैरपूर्वैर्वितरणपौरुषशौर्यधैर्यपूर्वैः ।
अनितरसुलभैर्गुणैर्विभाति क्षितिपविरेष परः पुमानिवाद्यः ॥ ६ ॥

अनृतुषु तरवः सुपुष्पिताग्रा बहुतरदुग्धदुघाश्च गोमहिष्यः ।
क्षितिरभिमतवृष्टिराढ्यसस्या स्वविहितधर्मरताः प्रजाश्च सर्वाः ॥ ७ ॥

कालस्तिष्यः सर्वदोषाकरोऽपि त्रेतामस्येत्यस्य राज्ञः प्रभावात् ।
तस्मादस्मद्राजवर्ष्म प्रविश्य प्राप्तैश्वर्यः शास्ति कश्चिद्धरित्रीम् ॥ ८ ॥

तदयं गुणवारिधिर्यथा प्रतिपद्येत न पूर्वकं वपुः ।
करवाम तथेति निश्चयं कृतवन्तः सचिवाः परस्परम् ॥ ९ ॥

अथ ते भुवि यस्य कस्यचिद्विगतासोर्वपुरस्ति देहिनः ।
अविचार्य तदाशु दह्यतामिति भृत्यान् रहसि न्ययोजयन् ॥ १० ॥

अथ राज्यधुरं धराधिपः परमाप्तेषु निवेश्य मन्त्रिषु ।
बुभुजे विषयान् विलासिनीसचिवोऽन्यक्षितिपालदुर्लभान् ॥ ११ ॥

स्फटिकफलके ज्योत्स्नाशुभ्रे मनोज्ञशिरोगृहे
वरयुवतिभिर्दीव्यन्नक्षैर्दुरोदरकेलिषु ।
अधरदशनं बाह्वाबाहं महोत्पलताडनं
रतिविनिमयं राजाऽकार्षीद्ग्लहं विजये मिथः ॥ १२ ॥

अधरजसुधाश्लेषादुच्चं सुगन्धि मुखानिल-
व्यतिकरवशात्कामं कान्ताकराचमतिप्रियम् ।
मधु मदकरं पायं पायं प्रियाः समपाययत्
कनकचषकैरिन्दुच्छायापरिष्कृतमादरात् ॥ १३ ॥

मधुमदकलं मन्दास्विन्नं मनोहरभाषणं
निभृतपुलकं सीत्काराढ्यं सरोरुहसौरभम् ।
दरमुकुलिताक्षीपक्ष्मजं विसृत्वरमन्मथं
प्रचरदलकं कान्तावक्त्रं निपीय कृती नृपः ॥ १४ ॥

विघृतजघनं संदष्टोष्ठं प्रणुन्नपयोधरं
प्रसृतभणितं प्राप्तोत्साहं रणन्मणिमेखलम् ।
निभृतकरणं नृत्यद्गात्रं गतेतरभावनं
प्रसृमरसुखं प्रादुर्भूतं किमप्यपदं गिराम् ॥ १५ ॥

मनसिजकलातत्त्वाभिज्ञो मनोज्ञविचेष्टितः
सकलविषयव्यापृत्ताक्षः सदानुसृतोद्यमः ।
कृतकुचगुरूपास्त्याऽत्यन्तं सुनिर्वृतमानसो
निधुवननवब्रह्मानन्दं निरर्गलमन्वभूत् ॥ १६ ॥

पुरेव भोगान् बुभुजे महीभृत्स योगिनीभिः सहितोऽप्यरंस्त ।
कन्दर्पशास्त्रानुगतः प्रवीणैर्वात्स्यायने तत्त्व निरीक्षताद्धा ॥ १७ ॥

वात्स्यायनप्रोदितसूत्रजातं तदीयभाष्यं च निरीक्ष्य सम्यक् ।
स्वयं व्यधत्ताभिनवार्थगर्भं निबन्धमेकं नृपवेषधारी ॥ १८ ॥

पाराशर्यवनिभृति प्रविश्य राज्ञो वर्ष्मैवं विहरति तद्विलासिनीभिः ।
स्पष्टं तत्समयमतीतमस्य शिष्या रक्षन्तो वपुरितरेतरं जजल्पुः ॥

आचार्यैरवधिरकारि मासमात्रं सोऽतीतः पुनरपि पञ्चषाश्च पक्षाः ।
अद्यापि स्वकरणमेत्य नः सनाथान् कर्तुं तन्मनसि न जायतेऽनुकम्पा ॥

किं कुर्मः क नु मृगयामहे क यामः
को जानीत वसतीति नोऽभिदध्यात् ।

विज्ञातुं कथमिममीश्महे विचिन्त्या-
प्यासिन्धु क्षितितलमन्यगात्रगूढम् ॥ २१ ॥

गुरुणा करुणानिधिना ह्यधुना यदि नो निहिता विहितास्त्यजिताः ।
जगति क्व गतिर्भजतां त्यजतां स्वपदं त्रिपदन्तकरं तदिदम् ॥ २२ ॥

निःशेषेन्द्रियजाड्यकृन्ननवाह्लादं मुहुस्तन्वती
नित्याश्लिष्टरजोयतीशचरणाम्भोजाश्रया श्रेयसी ।
निष्प्रत्यूहविजृम्भमाणवृजिनस्योद्वासना वासना
निःसीमा हृदयेन कल्पितपरीरम्भा चिरं भाव्यते ॥ २३ ॥

फलितैरिव सत्त्वपादपैः परिणामैरिव योगसम्पदाम् ।
समयैरिव वैदिकश्रियां सशरीरैरिव तत्त्वनिर्णयैः ॥ २४ ॥

सघनैर्निजलाभवैभवात् सकुटुम्बैरुपशान्तिकान्तया ।
अतदन्यजयाऽखिलात्मकैरनुगृह्येय कदा नु धामभिः ॥ २५ ॥

अविनयं विनयन्नसतां सतामतिरयं तिरयन् भवपावकम् ।
जयति यो यतियोगभृतां वरो जगति मे गतिमेष विधास्यति ॥ २६ ॥

विगतमोहतमोहतिमाप्य यं विधुतमायतमा यतयोऽभवन् ।
भमृतदस्र तदस्य दृशः सुतावववतरेम तरेम शुगर्णवम् ॥ २७ ॥

शुभाशुभविभाजकस्फुरणदृष्टिसृष्टिधयः
क्षपान्धमतपान्थदुष्कथकदम्बकुक्षिंभरिः ।
कदा भवसि मे पुनःपुनरनाद्यविद्यातमः
प्रमृद्य गलितद्वयं पदमुदञ्चयन्नद्वयम् ॥ २८ ॥

मर्त्यानां निजपादपङ्कजजुषामाचार्य वाचा यया
रुन्धानो मतिकल्मषं त्वमिह किंकुर्वाणनिर्वाणया ।

द्राङ् नायास्यसि चेत्सुधीकृतपरीहासस्य दासस्य ते
दुःखान्तो न भवेदितीक्ष्व स पुनर्जानीहि भीनीहि मा ॥ २९ ॥

इति खेदमुपेयुषि मित्रजने प्रतिपन्नयतिक्षितिभृन्महिमा ।
शुचमर्थवता शमयन्वचसा निजगाद सरोरुहपाद इदम् ॥ ३० ॥

पर्याप्तं नः कर्तव्यमुपेत्यात्र समुद्रायः
कृत्वोत्साहं भूमिमशेषामपिधानात् ।
अन्वेष्यामो भूविवराण्यप्यथ च द्यां
यद्वद्देवं देवमनुष्यादिषु गूढम् ॥ ३१ ॥

अनिर्विण्णचेताः समास्थाय यत्नं सुदुष्प्रापमप्यर्थमाप्नोत्यवश्यम् ।
मुहुर्विघ्नजालैः सुरा हन्यमानाः सुधामप्यवापुह्यनिर्विण्णचित्ताः ॥ ३२ ॥

यदप्यन्यगात्रप्रतिच्छन्नरूपो दुरन्वेषणः स्याद्गुरुर्नस्तथापि ।
स्वभानूदरस्थः शशीव प्रकाशैस्तदीयैर्गुणैरेव वेत्तुं स शक्यः ॥ ३३ ॥

इक्षुचापागमापेक्षया निर्गतो वर्त्म तस्योचितं कृष्णवर्त्मद्युतिः ।
विभ्रमाणां पदं सुभ्रुवां भूपतेः प्राप्तुमर्हत्यकामाग्रणीः संयमी ॥ ३४ ॥

नित्यतुष्ट्याग्रयाप्याश्रिते निर्वृताः प्राणिनो रोगशोकादिना नेक्षिताः ।
दस्युपीडोज्झिताः स्वस्वधर्मे रताः कालवर्षी स्वराण्मेदिनी कामधुः ॥

तदिहाऽऽलस्यमपास्य विचेतुं निरवधिसंसृतिजलधेः सेतुम् ।
देशिकवरपदकमलं यामो न वृथाऽनेहसमत्र नयामः ॥ ३६ ॥

इति जलरुहपदवचनं सर्वे मनसि निधाय निरुद्धदर्गे ।
क्वचिदत्र निवेश्य शरीरं रक्षितुमन्वे निरगुरुदारम् ॥ ३७ ॥

ते चिन्वन्तः शैलाच्छैलं विपयाद्विषयं द्रुतमनुवेलम् ।
प्रापुर्धिक्कृतविबुधनिदेशान् स्फीतानमरकनृपतेर्देशान् ॥ ३८ ॥

भूत्वा पुनरप्युत्थितमेनं श्रुत्वा चैन्यदिलीपसमानम् ।
त्यक्त्वा विरहजदैन्यममन्दं मत्वाऽऽचार्यं धैर्यमविन्दन् ॥ ३९ ॥

ते च ज्ञात्वा गानविलोलं तरुणीसक्तं धरणीपालम् ।
विविशुः स्वीकृतगायकवेषा नगरं विदितसमस्तविशेषाः ॥ ४० ॥

राज्ञे ज्ञापितविद्यातिशयास्ते तत्संग्रहविधृताग्निसपाः ।
रमणीशतमध्यगमवनीन्द्रं ददृशुस्ताराधृतमिव चन्द्रम् ॥ ४१ ॥

वरचामरकरतरुणीकङ्कणरञ्जितमनोहरपश्चाद्भागम् ।
गीतिगतिज्ञोद्गीतश्रुतिसुखतानसमुल्लसदग्रिमदेशम् ॥ ४२ ॥

धृतचामीकरदण्डसितातपवारणरञ्जितरत्नकिरीटम् ।
श्रितविग्रहमिव रतिपतिमाश्रितभुवमिव सान्तःपुरममरेशम् ॥ ४३ ॥

रुचिरवेषाः समासाद्य तां संसदं नयनसंज्ञावितीर्णासना भूभुजा ।
समतिसृष्टास्ततः सुस्वरं मूर्च्छनापदविदस्ते जगुर्मोहयन्तः सभाम् ॥

भृङ्ग तव सङ्गतिमवाप्य गिरिशृङ्गे तुङ्गविटपिनि सङ्गमजुषि त्वदङ्गे ।
स्वाङ्गरचिताः सकलगान्तरङ्गाः संगमकृते भङ्गमुपयन्ति भृङ्गाः ॥

पञ्चशरसमयसञ्चयकृते प्राञ्चं मुञ्चसिवेह सञ्चरसि प्रपञ्चम् ।
पञ्चजनमुख पञ्चमुखमप्यनञ्चंस्त्वं च गतिरिति किंच किल वञ्चितोऽसौ ॥

पर्वशशिमुख सर्वमपहाय पूर्वं कुर्वेदिह गर्वमनुसृत्य हृदपूर्वम् ।
न स्मरसि वस्त्वस्मदीयमिति कस्मात्संस्मर तदस्मर परमस्मदुक्त्या ॥

नेतिनेत्यादिनिगमवचनेन निपुणं निषिध्य मूर्तामूर्तराशिम् ।
यदशक्यपनिह्नवं स्वात्मरूपतया जानन्ति कोविदास्तत्त्वमसि तत्परम् ॥

स्वाधमुत्पाद्य विश्वमनुप्रविश्य गूढमन्नमयादिकोशतुषजाले ।
कलयो विविच्य युक्त्यवघाततो यत्तण्डुलवदाददति तत्त्वमसि तत्त्वम् ॥

विषमविषयेषु सञ्चारिणोऽक्षाश्वान् दोषदर्शनकशाभिघाततः ।
स्वैरं संनिवर्त्य स्वान्तरश्मिभिर्धीरा बध्नन्ति यत्र तत्त्वमसि तत्त्वम् ॥

व्यावृत्तजाग्रदादिष्वनुस्यूतं तेभ्योऽन्यदिव पुष्पेभ्य इव सूत्रम् ।
इति यदौपाधिकत्रयपृथक्त्वेन विदन्ति सूरयस्तत्त्वमसि तत्त्वम् ॥ ५१ ॥

पुरुष एवेदमित्यादिवेदेषु सर्वकारणतया यस्य सार्वात्म्यम् ।
हाटकस्येव मुकुटादितादात्म्यं समाम्नायते तत्त्वमसि तत्त्वम् ॥ ५२ ॥

यश्चाहमत्र वर्ष्मणि भामि सोऽसौ
योऽसौ विभाति रविमण्डले सोऽहमिति ।
वेदवादिनो व्यतिहारतो यद्-
अध्यापयन्ति यत्नतस्तत्त्वमसि तत्त्वम् ॥ ५३ ॥

वेदानुवचनसद्दानमुखधर्मैः श्रद्धयाऽनुष्ठितैर्विधया युक्तैः ।
विविदिषन्त्यत्यन्तविमलस्वान्ता ब्राह्मणा यद्ब्रह्म तत्त्वमसि तत्त्वम् ॥

शमदमोपरमादिसाधनैर्धीराः स्वात्मनाऽऽत्मनि यदन्विष्य कृतकृत्याः ।
अधिगतामितसच्चिदानन्दरूपा न पुनरिह खिद्यन्ते तत्त्वमसि तत्त्वम् ॥

अविगीतमेवं नरपतिराकर्ण्य वर्णिनात्मार्थम् ।
विससर्ज परितोषात्तानभिज्ञातकर्तव्यः ॥ ५६ ॥

उद्बोधितः सदसि तैरवलम्ब्य मूर्च्छां
निर्गत्य राजतनुतो निजमाविवेश ।
गात्रं पुरोदितनयेन स देशिकेन्द्रः
संज्ञामवाप्य च पुरेव समुत्थितोऽभूत् ॥ ५७ ॥

तदनु कुहरमेत्य पूर्वदृष्टं नरनिभृत्यविसृष्टनायकेन ।
निजवपुरवलोक्य दह्यमानं झटिति स योगधुरन्धरो विवेश ॥ ५८ ॥

सपदि दहनशान्तये महान्तं नरमृगरूपमधोक्षजं शरण्यम् ।
स्तुतिभिरधिकलालसत्पदाभिस्त्वरितमतोषयदात्मवित्प्रधानः ॥ ५९ ॥

नरहरिकृपया ततः प्रशान्ते प्रबलज्वरे स हुताशने प्रविष्टः ।
निरगमदचलेन्द्रकन्दरान्ताद्विधुरिव वक्त्रविलाद्विधुन्तुदस्य ॥ ६० ॥

तदनु शमधनाधिपो विनेयैश्चिरविरहादतिवर्धमानहार्दैः ।
सनक इव वृतः सनन्दनाद्यैर्जिगमिषु राजनि मण्डनस्य गेहम् ॥६१॥

तदनु सदनमेत्य पूर्वदृष्टं गगनपथाद्गलितक्रियाभिमानम् ।
विषयविपिनिवृत्तपंशुवैरतनुत मण्डनमिश्रमक्षिपात्रम् ॥ ६२ ॥

तं समीक्ष्य नभसश्च्युतं स च प्राञ्जलिः प्रणतपूर्वविग्रहः ।
अर्हणाभिरभिपूज्य तस्थिवानीक्षणैरनिमिषैः पिबन्निव ॥ ६३ ॥

स विश्वरूपो बत सत्यवादी पपात पादाम्बुजयोर्यतीशः ।
गृहं शरीरं मम यच्च सर्वं तवेति वादी मुदितो महात्मा ॥ ६४ ॥

प्रेयसा प्रथममर्चितं मुनिं प्राप्तविष्टरमुपस्थितं बुधैः ।
प्रश्रयावनतमूर्तिरब्रवीच्छारदाऽभिवदने विशारदा ॥ ६५ ॥

ईशानः सर्वविद्यानामीश्वरः सर्वदेहिनाम् ।
ब्रह्मणोऽधिपतिर्ब्रह्मन् भवान् साक्षात्सदाशिवः ॥ ६६ ॥

सदसि मामविजित्य तथैव यन्मदनशासनकामकलास्वपि ।
तदवबोधकृते कृतिमाचरस्तदिह मर्त्यचरित्रविडम्बनम् ॥ ६७ ॥

त्वया यदावां विजितौ परात्मन तत् त्रपामावहतीव्य सर्वथा ।
कृताभिभूतिर्नि मयूखशालिना निशाकरादेरपकीर्तये खलु ॥ ६८ ॥

आदायान्यं धाम कामं प्रयासाम्यर्हस्यच्छं मामनुज्ञातुमर्हन् ।
इत्यामन्त्र्यान्तर्हिता योगदाद्रत्या पश्यन् देवी प्राज्यकान्ता प्रभाते ॥

जानामि त्वां देवि देवस्य धातुर्भार्यामिष्टामष्टमूर्तेः सगर्भ्याम् ।
वाचामाद्यां देवतां विश्वगुर्वीं चिन्मात्रामप्यत्र लक्ष्म्यादिरूपाम् ॥७०॥

तस्मादस्मत्कल्पितेष्वर्च्यमाना स्थानेषु त्वं शारदाख्या दिशन्ती ।
इष्टानर्थानृष्यशृङ्गादिकेषु क्षेत्रेष्वास्स्व प्राप्तसंनिधाना ॥ ७१ ॥

तथेति संश्रुत्य सरस्वती सा प्रायात्स्वियं धाम विनामहस्य ।
अदर्शनं तत्र सतीस्य सर्वं आकस्मिकं विस्मयमीयुरुच्चैः ॥ ७२ ॥

तस्या यतीशजितभर्तृयवित्त्वजात-
वैवन्ध्यतेमवशुचा भुवमस्पृशन्त्याः ।
अन्तर्विमेक्ष्य मुदितोऽजनि मण्डनोऽपि
तत्साधु वीक्ष्य मुमुदे यतिशेखरश्च ॥ ॥ ७३ ॥

मण्डनमिश्रोऽप्यथ विधिपूर्वं दत्त्वा वित्तं यागे सर्वम् ।
आत्मारोपितशोचिष्केशो भेजे शङ्करमस्तमिताशः ॥ ७४ ॥

संन्यासगृह्यविधिना सकलानि कर्मा-
प्यह्नाय शङ्करगुरुर्विदुषोऽस्य कुर्वन् ।
कर्णे जगौ किमपि तत्त्वमसीति वाक्यं
कर्णेजपं निखिलसंसृतिदुःखहानेः ॥ ७५ ॥

संन्यासपूर्वं विधिवद्विमिश्रे पश्चाद्गुपादिक्षदयाऽऽत्मतत्त्वम् ।
आचार्यवर्यः श्रुतिमस्तकस्थं तदादिवाक्यं पुनराबभाषे ॥ ७६ ॥

त्वं नासि देहो घटवद्दृश्यनात्मा रूपादिमत्त्वादिह जातिमत्त्वात् ।
ममेति भेदप्रथनादभेदसंप्रत्ययं विद्धि विपर्ययोत्थम् ॥ ७७ ॥

लोप्यो हि लोप्यव्यतिरिक्तलोपको दृष्टो घटादिः खलु तादृशी तनुः ।
दृश्यत्वहेतोर्व्यतिरेकसाधने त्वचः शरीरे कथनात्स्वतागतिः ॥ ७८ ॥

नापीन्द्रियाणि खलु तानि च साधनानि
दात्रादिवत्कथममीषु तवाऽऽत्मभावः ।
चक्षुर्मदीयमिति भेदगतेरमीषां
स्वप्नादिभावविरहाच्च घटादिसाम्यम् ॥ ७९ ॥

यद्यात्मतैषां समुदायगा स्यादेकव्ययेनापि भवेन्न तद्धीः ।
प्रत्येकमात्मत्वमुदीर्यते चेन्नश्येच्छरीरं बहुनायकत्वात् ॥ ८० ॥

आत्मत्वमन्यतमगं यदि चक्षुरादेश्चक्षुर्विनाशसमये स्मरणं न हि स्यात् ।
एकाश्रयत्वनियमात्स्मरणानुभूत्योर्दृष्टश्रुतार्थविषयावगतिश्च न स्यात् ॥

मनोऽपि नाऽऽत्मा करणत्वहेतोर्मनो मदीयं गतमन्यतोऽभूत् ।
इति प्रतीतेर्व्यभिचारितायाः सुप्तौ च तच्चिन्मनसोर्विविक्तता ॥ ८२ ॥

अनयैव दिशा निराकृता न च बुद्धेरपि चाऽऽत्मता स्फुटम् ।
अपि भेदगतेरनन्वयात्करणादाविव बुद्धिमुज्झ भोः ॥ ८३ ॥

नाहंकृतिश्चरमधातुपदप्रयोगात्प्राणा मदीया इति लोकवादात् ।
प्राणोऽपि नाऽऽत्मा भवितुं प्रगल्भः सर्वोपसंहारिणि सन्सुषुप्ते ॥ ८४ ॥

एवं शरीराद्यतिरिक्त आत्मा त्वंशब्दवाच्योऽभिहितोऽत्र वाक्ये ।
तदोदितं ब्रह्म जगन्निदानं तथा तयैक्यं पदयुग्मबोध्यम् ॥ ८५ ॥

कथं तदैक्यं प्रतिपादयेद्वचः सर्वज्ञसंमूढपदाभिषिक्तयोः ।
न ह्येकता संतमसप्रकाशयोः संदृष्टपूर्वा न च दृश्यतेऽधुना ॥ ८६ ॥

सत्यं विरोधगतिरस्ति [illegible] वाच्यगेयं
सोऽयं पुमानितिवदत्र विरोधहानेः ।
आदाय वाच्यमविरोधि पदद्वयं तत्
लक्ष्यैक्यबोधनपरं ननु को विरोधः ॥ ८७ ॥

जहीहि देहादिगतामहंधियं चिरार्जितां कर्मशतैः सुदुस्त्यजाम् ।
विवेकबुद्ध्या परमेव सन्ततं ध्यायाऽऽत्मभावेन यतो विमुक्तता ॥

साधारणे वपुषि काकमृगालवह्नि-
मालादिकस्य ममतां त्यज दुःखहेतुम् ।
तद्वज्जहीहि बहिरर्थगतां च विद्धं-
थित्तं बधान परमात्मनि निर्विशङ्कम् ॥ ८९ ॥

तीरात्तीरं संचरन् दीर्घमत्स्यस्तीराद्भिन्नो लिप्यते नापि तेन ।
एवं देही स्वप्नजाग्रद्दशादौ तस्माद्भिन्नो नापि तद्धर्मको वा ॥ ९० ॥

जाग्रत्स्वप्नसुषुप्तिलक्षणमदोऽवस्थात्रयं चिद्घनौ
त्वय्येवानुगते मिथो व्यभिचरद्धीसंभ्रमज्ञानतः ।
कल्प्यं रज्ज्विदमंशके वसुमतीच्छिद्राहिदण्डादिवत्
तद्भासि तुरीयमुज्झितभयं मा त्वं पुरेव भ्रमीः ॥ ९१ ॥

प्रत्यक्तमं परपदं विदुषोऽन्तिकस्थं
दूरं तदेव परिमूढमतेर्जनस्य ।
अन्तर्बहिश्च चितिरस्ति न वेति कश्चि-
चिन्वन् बहिर्बहिरहो महिमात्मशक्तेः ॥ ९२ ॥

यथा प्रपायां बहवो मिलन्ते क्षणे द्वितीये बत भिन्नमार्गाः ।
प्रयान्ति तद्वद्बहुनामभाजो गृहे भवन्त्यत्र न कश्चिदन्ते ॥ ९३ ॥

सुखाय यत्क्रियते दिवानिशं सुखं न किञ्चिद्बहुदुःखमेव तत् ।
विना न हेतुं सुखजन्म दृश्यते हेतुश्च हेत्वन्तरसंनिधौ भवेत् ॥ ९४ ॥

परिपक्वमतेः सकृत् श्रुतं जनयेदात्मधियं श्रुतेर्वचः ।
परिमन्दमतेः शनैः शनैर्गुरुपादाब्जनिषेवणादिना ॥ ९५ ॥

प्रणवाभ्यसनोक्तकर्मणोः करणेनापि गुरोर्निषेवणात् ।
अपगच्छति मानसं मलं क्षमते तत्त्वमुदीरितं ततः ॥ ९६ ॥

मनोऽनुवर्तेत दिवानिशं गुरौ गुरुर्हि साक्षाच्छिव एव तत्त्ववित् ।
निजानुवृत्त्या परितोषितो गुरुर्विनेयवर्गं कृपया हि वीक्षते ॥ ९७ ॥

सा कल्पवल्लीव निजेष्टमर्थं फलत्यवश्यं किमकार्यमस्याः ।
आज्ञा गुरोस्तत्परिपालनीया सा मोदमानीय विधातुमिष्टा ॥ ९८ ॥

गुरूपदिष्टा निजदेवता चेत्कुप्येत्तदा पालयिता गुरुः स्यात् ।
रुष्टे गुरौ पालयिता न कश्चिद्गुरौ न तस्माज्जनयेत कोपम् ॥ ९९ ॥

पुमान्पुमर्थं लभतेऽपि चोदितं भजन्निवृत्तः प्रतिषिद्धसेवनात् ।
विधिं निषेधं च निवेदयत्यसौ गुरोरनिष्टच्युतिरिष्टसंभवः ॥ १०० ॥

आराधितं दैवतमिष्टमर्थं ददाति तस्याधिगमो गुरोः स्यात् ।
नो चेत्कथं वेदितुमीश्वरोऽयमतीन्द्रियं दैवतमिष्टदं नः ॥ १०१ ॥

तुष्टे गुरौ तुष्यति देवतागणो रुष्टे गुरौ रुष्यति देवतागणः ।
सदाऽऽत्मभावेन सदात्मदेवताः पश्यन्नसौ विश्वमयो हि देशिकः ॥

एवं पुराणगुरुणा परमात्मतत्त्वं
शिष्टो गुरोश्चरणयोर्निपपात तस्य ।
धन्योऽस्म्यहं तव गुरो करुणाकटाक्ष-
पातेन पातिततमा इति भाषमाणः ॥ १०३ ॥

ततः समादिश्य सुरेश्वराख्यां दिगङ्गनाभिः क्रियमाणसख्याम् ।
सच्छिष्यतां भाष्यकृतश्च मुख्यामवाप तुच्छीकृतधातृसौख्याम् ॥

निखिलनिगमचूडाचिन्तया हन्त यावत्
स्वमनवधिकसौख्यं निर्विशन्निर्विशङ्कम् ।

महुतिथमभितोऽसौ नर्मदां नर्मदां तां
मगधभुवि निवासं निर्ममे निर्ममेन्द्रः ॥ १०५ ॥

इति वशीकृतमण्डनपण्डितः प्रणतमस्करणत्रयदण्डितः ।
सकलसद्गुणमण्डलमण्डितः स निरगात्कृतदुर्मतखण्डितः ॥ १०६ ॥

कुसुमितविविधपलाशभ्रमदलिकुलगीतमधुरस्वनम् ।
पश्यन् विपिनमयासीदाशां कीनाशपालितामेषः ॥ १०७ ॥

तत्र महाराष्ट्रमुखे देशे ग्रन्थान् प्रचारयन् प्राज्ञतमः ।
शमितमतान्तरमानः शनकैः सनकोपमोऽगमच्छ्रीशैलम् ॥ १०८ ॥

प्रफुल्लमल्लिकावनप्रसङ्गसङ्गतामित-
प्रकाण्डगन्धबन्धुरप्रवातधूतपादपम् ।
सदामदद्विपाधिपप्रहारशार्ङ्कपरि
व्रजं भुजङ्गभूषणप्रियं स्वयम्भुकौशलम् ॥ १०९ ॥

कलिकल्मषभङ्गायां सोऽद्रेराराचलत्तरङ्गायाम् ।
अधरीकृततुङ्गायां सस्नौ पातालगामिगङ्गायाम् ॥ ११० ॥

नमन्मोहभङ्गं नभोलेहिशृङ्गं त्रुटत्तापपङ्कं रटन्धिभृङ्गम् ।
समाश्लिष्टगङ्गं प्रहृष्टान्तरङ्गं तमारुह्य तुङ्गं ददर्शेशलिङ्गम् ॥ १११ ॥

प्रणमद्भवबीजभर्जनं प्रणिपत्यामृतसम्पदार्जनम् ।
प्रमुमोद स मल्लिकार्जुनं भ्रमराम्बासचिवं नतार्जुनम् ॥ ११२ ॥

तीररुद्भिः कृष्णायास्तीरेऽवात्सीत्तिरोहितोष्णायाः ।
आवर्जिततृष्णाया आचार्येन्द्रो निरस्तकार्ष्णायाः ॥ ११३ ॥

तत्रातिचित्रपदमत्रभवान पवित्रकीर्तिर्विचित्रसुचरित्रनिधिः सुधीन्द्रान् ।
अग्राहयत्स्वकृतमसद्ग्रहनिग्रहार्थमस्यान् समग्रसुगुणान् महदग्रयायी ॥

अध्यापयन्तमसदर्थनिरासपूर्वं किन्त्वन्यतीर्थयशसं श्रुतिभाष्यजातम् ।
आक्षिप्य पाशुपतवैष्णवनीरशैवमाहेश्वराश्च विजिता हि सुरेश्वरार्यैः ॥

केचिद्विसृज्य मतमात्म्यममुष्य शिष्य-
भावं गता विगतमत्सरमानदोषाः ।
अन्ये तु मन्युवशमेत्य जघन्यचित्ता
निन्युः क्षणं निधनमस्य निरीक्षमाणाः ॥ ११६ ॥

वेदान्तीकृतनीचशूद्रवचसो वेदाः स्वयं कल्पनाः
पापिष्ठाः स्वमपि त्रयीपथमपि प्रायो दहन्तः खलाः ।
साक्षाद्ब्रह्मणि शङ्करे विदधति स्पर्धानिबद्धां मतिं
कृष्णे पौण्ड्रकवत्तथा न चरमां किं ते लभन्ते गतिम् ॥

वाणी काणभुजी च नैव गणिता लीना क्वचित्कापिली
शैवं चाशिवभावमेति भजते गर्हापदं चार्हतम् ।
दीर्घं दुर्गतिमश्नुते भुवि जनः पुष्णाति को वैष्णवं
निष्णातेषु यतीशशक्तिषु कथाकेलीकृताशक्तिषु ॥ ११८ ॥

तथागतकथा गता तदनुयायि नैयायिकं
वचोऽजनि न चोदितो वदति जातु तौतातितः ।
निदग्धति न दग्धधीर्विदितचापलं कापिलं
त्रिनिर्दयविनिर्दलद्विमतसङ्करे शङ्करे ॥ ११९ ॥

इति श्रीमाधवीये तत्कलाज्ञत्वप्रपञ्चनम् ।
संक्षेपशङ्करजये सर्गोऽयं दशमोऽभवत् ॥

( आदितः श्लोकाः—११४८ )

## ॥ एकादशः सर्गः ॥

### (उग्रभैरववधः)

तत्रैकदाच्छादितनैजदोषः पौलस्त्यवत्कल्पितसाधुवेषः ।
निर्मानमायं स्थितकार्यशेषः कापालिकः कश्चिदनल्पदोषः ॥ १ ॥

असावपश्यन्मदनाद्यवश्यं वश्येन्द्रियार्थैर्मुनिभिर्विमृग्यम् ।
आदिश्य भाष्यं सपदि प्रशस्यमासीनमाश्रित्य मुनिं रहस्यम् ॥ २ ॥

दृष्ट्वैव हृष्टः स चिरादभीष्टं निर्धार्य संसिद्धमिव स्वमिष्टम् ।
महद्विशिष्टं निजलाभतुष्टं विस्पष्टमाचष्ट च कृत्यशिष्टम् ॥ ३ ॥

गुणांस्तवाकर्ण्य मुनेऽनवद्यान्सार्वज्ञ्यसौशील्यदयालुताद्यान् ।
द्रष्टुं समुत्कण्ठितचित्तवृत्तिर्भवन्तमागां विदितप्रवृत्तिः ॥ ४ ॥

त्वमेक एवात्र निरस्तमोहः पराकृतद्वैतिवचःसमूहः ।
आभासि दूरीकृतदेहमानः शुद्धाद्वये योजितसर्वमानः ॥ ५ ॥

परोपकृत्यै प्रगृहीतमूर्तिरमर्त्यलोकेष्वपि गीतकीर्तिः ।
कटाक्षलेशार्दितसज्जनार्तिः सदुक्तिसम्पादितविश्वपूर्तिः ॥ ६ ॥

गुणाकरत्वाद्भुवनैकमान्यः समस्तविच्चादभिमानशून्यः ।
विजित्वरत्वाद्गलहस्तितान्यः स्वात्मप्रदत्वाच्च महावदान्यः ॥ ७ ॥

अशेषकल्याणगुणालयेषु परावरज्ञेषु भवादृशेषु ।
कार्यार्थिनः क्वाप्यनवाप्य कामं न यान्ति दुष्प्रापमपि प्रकामम् ॥

तस्मान्महत्कार्यमहं प्रपद्य निर्वर्तितं सर्वविदा त्वयाऽद्य ।
कपालिनं प्रीणयितुं यतिष्ये कृतार्थमात्मानमतः करिष्ये ॥ ९ ॥

अनेन देहेन सदैव गन्तुं कैलासमीशेन समं च रन्तुम् ।
अतोऽयं तीव्रतपोभिरुग्रं सुदुष्करैरब्दशतं समग्रम् ॥ १० ॥

तुष्टोऽब्रवीन्मां गिरिशः पुमर्थमभीप्सितं प्राप्स्यसि मत्प्रियार्थम् ।
जुहोषि चेत्सर्वविदः शिरो वा हुताशने भूमिपतेः शिरो वा ॥ ११ ॥

एतावदुक्त्वाऽन्तरधान्महेशस्तदादि तत्संग्रहणे धृताशः ।
चराम्यथापि क्षितिपो न लब्धो न सर्वविच्चैव मयोपलब्धः ॥ १२ ॥

दिष्ट्याऽद्य लोकस्य हिते चरन्तं सर्वज्ञमद्राक्षमहं भवन्तम् ।
इतः परं सेत्स्यति मेऽनुबन्धः सन्दर्शनान्तो हि जनस्य बन्धः ॥ १३ ॥

मूर्धाभिषिक्तस्य शिरःकपालं मुनीशितुर्वा मम सिद्धिहेतुः ।
आद्यं पुनर्मे मनसाऽप्यलभ्य ततः परं तत्रभवान् प्रमाणम् ॥ १४ ॥

शिरःप्रदानेऽद्भुतकीर्तिलाभस्तवापि लोके मम सिद्धिलाभः ।
आलोच्य देहस्य च नश्वरत्वं यद्रोचते सत्तम तत्कुरु त्वम् ॥ १५ ॥

तद्याचितुं न क्षमते मनो मे को वेष्टदायि स्वशरीरमुज्झतु ।
भवान् विरक्तो न शरीरमानी परोपकाराय धृतात्मदेहः ॥ १६ ॥

जनाः परक्लेशकथानभिज्ञा नक्तं दिवा स्वार्थकृतात्मचित्ताः ।
रिपुं निहन्तुं कुलिशाय वज्री दाधीचमादात्किल वाञ्छितास्थि ॥१७॥

दधीचिमुख्याः क्षणिकं शरीरं त्यक्त्वा परार्थे स्म यशःशरीरम् ।
प्राप्य स्थिरं सर्वगतं जगन्ति गुणैरनर्घ्यैः किल रञ्जयन्ति ॥ १८ ॥

वपुर्धरन्ते परतुष्टिहेतोः केचित्प्रशान्ता दयया परीताः ।
अस्मादृशाः केचन सन्ति लोके स्वार्थैकनिष्ठा दयया विहीनाः ॥ १९ ॥

परोपकारं च विनाऽस्ति किञ्चित्प्रयोजनं ते विधुतैषणस्य ।
अस्मादृशाः कामवशास्तु युक्तायुक्ते विजानन्ति न हन्त योगिन् ॥

जीमूतवाहो निजजीवदायी दधीचिरप्यस्थि मुदा ददानः ।
आचन्द्रतारार्कमनाद्यशून्यं प्राप्तौ यशः कर्णपथं गतौ हि ॥ २१ ॥

यद्यप्यदेयं ननु देहवद्भिर्मयाऽर्थितं गर्हितमेव सद्भिः ।
तथाऽपि सर्वत्र विरागवद्भिः किमस्त्यदेयं परमार्थविद्भिः ॥ २२ ॥

अखण्डमूर्धन्यकपालमाहुः संसिद्धिदं साधकपुङ्गवेभ्यः ।
विना भवन्तं बहवो न सन्ति वदत् पुमांसो भगवन् पृथिव्याम् ॥

प्रयच्छ शीर्षं भगवन्नमः स्तादितीरयित्वा पतितं पुरस्तात् ।
तमब्रवीद्वीक्ष्य सुधारवत्वात्कृपालुराकुञ्चननाः समस्तात् ॥ २४ ॥

नैवाभ्यसूयामि वचस्त्वदीयं प्रीत्या प्रयच्छामि शिरोऽस्मदीयम् ।
को वाऽर्थिसात्माङ्गतमो नृकायं जानन्न कुर्यादिह बह्वपायम् ॥ २५ ॥

पतत्यवश्यं हि विकृष्यमाणं कालेन यत्नादपि रक्ष्यमाणम् ।
चर्माधुना सिध्यति चेत्परार्थः स एव मर्त्यस्य परः पुमर्थः ॥ २६ ॥

यते विविक्तेऽधिसमाधि सिद्धिविन्मिथः समायाहि करोमि ते मतम् ।
नाहं प्रकाशं वितरीतुमुत्सहे शिरःकपालं विजनं समाश्रय ॥ २७ ॥

शिष्या विदन्ति यदि चिन्तितकार्यमेतद्
योगिन् मदेकशरणा विहतिं विदध्युः ।
को वा सहेत वपुरेतदपोहितुं स्वं
को वा क्षमेत निजनाथशरीरमोक्षम् ॥ २८ ॥

तौ संविदं वितनुतामिति संप्रहृष्टौ
योगी जगाम मुदितो निलयं मनस्वी ।
श्रीशङ्करोऽपि निजधामनि जोषमास
प्रोचे न किंचिदपि भावमसौ मनोगम् ॥ २९ ॥

शूली त्रिपुण्ड्री पुरतोऽवलोकी कङ्कालमालाकृतगात्रभूषः ।
संरक्तनेत्रो मदघूर्णिताक्षो योगी ययौ देशिकवासभूमिम् ॥ ३० ॥

शिष्येषु शिष्टेषु विदूरगेषु स्नानादिकार्याय विविक्तभाजि ।
श्रीदेशिकेन्द्रे तु सनन्दनाल्पभीत्या स्वदेहं व्यवधाय गूढे ॥ ३१ ॥

तं भैरवाकारमुदीक्ष्य देशिकस्त्यक्तुं शरीरं व्यधित स्वयं मनः ।
आत्मानमात्मन्युदयुङ्क्त यो जपन् समाहितात्मा करणानि संहरन् ।

तं भैरवोऽलोकत लोकपूज्यं स्वसौख्यतुच्छीकृतदेवराज्यम् ।
योगीशमासादितनिर्विकल्पं सनत्सुजातप्रभृतेरनल्पम् ॥ ३३ ॥

जत्रुप्रदेशे चिबुकं निधाय व्यात्तास्यमुत्तानकरौ निधाय ।
जानूपरि प्रेक्षितनासिकान्तं विलोचने सामि निमील्य कान्तम् ॥ ३४

आसीनमूर्ध्वीकृतपूर्वगात्रं सिद्धासने शेषितबोधमात्रम् ।
चिन्मात्रविन्यस्तहृषीकवर्गं समाधिविस्मारितविश्वसर्गम् ॥ ३५ ॥

विलोक्य तं हन्तुमपास्तशङ्कः स्वबुद्धिपूर्वार्जिततीव्रपङ्कः ।
प्रापोद्यतासिः सविधं स यावद्विज्ञातवान् पद्मपदोऽपि तावत् ॥ ३६ ॥

त्रिशूलमुद्यम्य निहन्तुकामं गुरुं यतात्मा समुदैक्षतान्तः ।
स्थितश्चुकोप ज्वलिताग्निकल्पः स पद्मपादः स्वगुरोर्हितैषी ॥ ३७ ॥

स्मरन्नथैव स्मरदार्तिहारि प्रह्लादवश्यं परमं महस्तत् ।
स मन्त्रसिद्धो नृहरेर्नृसिंहो भूत्वा ददर्शोग्रदुरीहचेष्टाम् ॥ ३८ ॥

स तत्क्षणक्षुब्धनिजस्वभावः प्रवृद्धरुड् विस्मृतमर्त्यभावः ।
आविष्कृतात्युग्रनृसिंहभावः समुत्पपातातुलितप्रभावः ॥ ३९ ॥

सटाच्छटास्फोटितमेघसङ्घस्तीव्रारवत्रासितभूतसङ्घः ।
संवेगसंमूर्च्छितलोकसङ्घः किमेतदित्याकुलदेवसङ्घः ॥ ४० ॥

क्षुभ्यत्समुद्रं समुद्धूतौर्वं रटन्निशाटं स्फुटदद्रिकूटम् ।
ज्वलद्दिगन्तं प्रचलद्धरान्तं प्रभ्रश्यदर्कं दलदन्तरिक्षम् ॥ ४१ ॥

जवादभिद्रुत्य शितस्वरूपैर्दैत्येश्वरस्येव पुरा नखाग्रैः ।
क्षिपत्त्रिशूलस्य स तस्य वक्षो ददार विक्षिप्तसुरारिपक्षः ॥ ४२ ॥

ततो दृगत्युग्रनखायुधाग्रो दंष्ट्रान्तरप्रोतदुरीहदेहः ।
निन्ये तदानीं नृहरिर्विदीर्णब्रह्माण्डनाडालिकमट्टहासम् ॥ ४३ ॥

आकर्णयंस्तं निनदं बहिर्गता उपागमन्नाकुलचित्तवृत्तयः ।
व्यलोकयन् भैरवमग्रतो मृतं ततो विमुक्तं च गुरुं सुखोपितम् ॥ ४४ ॥

प्रह्लादवश्यो भगवान् कथं वा प्रसादितोऽयं नृहरिस्त्वयेति ।
संविस्मयैः स्निग्धजनैः स पृष्टः सनन्दनः सस्मितमित्यवादीत् ॥ ४५ ॥

पुरा किलाहोबलभूधराग्रे पुण्यं समाश्रित्य किमप्यरण्यम् ।
भवच्छरण्यं भगवन्तमेनं ध्यायन्ननेकान् दिवसाननैषम् ॥ ४६ ॥

किमर्थमेको गिरिगह्वरेऽस्मिन् वाचंयम त्वं वससीति शश्वत् ।
केनापि पृष्टोऽत्र किरातयूना प्रत्युत्तरं प्रागहमित्यवोचम् ॥ ४७ ॥

आकण्ठमत्यद्भुतमर्त्यमूर्तिः कण्ठीरवात्मा परतश्च कश्चित् ।
मृगो वनेऽस्मिन् मृगयो वसन्मे भवत्यहो नाक्षिपथे कदापि ॥ ४८ ॥

इतीरयत्येव मयि क्षणेन वनेचरोऽयं प्रविशन् वनान्तम् ।
निबध्य गाढं नृहरिं लताभिः पुण्यैरगण्यैः पुरतो व्यधान्मे ॥ ४९ ॥

महर्षिभिस्त्वं मनसाप्यगम्यो वनेचरस्येव कथं वशेऽभूः ।
इत्यद्भुताविष्टहृदा मयाऽसौ विज्ञाप्यमानो विभुरित्यवादीत् ॥ ५० ॥

एकाग्रचित्तेन यथाऽमुनाहं ध्यातस्तथा धातृमुखैर्न पूर्वैः ।
नोपालभेथास्त्वमितीरयन्मे कृत्वा प्रसादं कृतवांस्तिरोधिम् ॥ ५१ ॥

6. 18.

आकर्ण्य तां पद्मपदस्य वाणीमानन्दमग्नैरखिलैरमानि ।
जगर्ज चोच्चैर्जगदण्डभाण्डं भूम्ना स्वधाम्ना दलयन् नृसिंहः ॥ ५२ ॥

ततस्तदाभीटचलत्समाधिः स्वात्मप्रबोधोन्मथितत्र्युपाधिः ।
उन्मील्य नेत्रे विकरालवक्त्रं व्यलोकयन्मानवपञ्चवक्त्रम् ॥ ५३ ॥

चन्द्रांशुसौन्दर्यसटाजटालं तार्तीयनेत्राञ्जकनत्रिटालम् ।
सहोद्यदुष्णांशुसहस्रभासं विध्यण्डविस्फोटकृदट्टहासम् ॥ ५४ ॥

नखाग्रनिर्भिन्नकरालिवक्षःस्थलोच्चलच्छोणितपङ्किलाङ्गम् ।
श्रीवत्सवत्सं गलवैजयन्तीश्रीरत्नसंस्पर्धितदन्त्रमालम् ॥ ५५ ॥

सुरासुरत्रासकरातिघोरस्वाकारसारव्यथिताण्डकोशम् ।
दंष्ट्राकरालाननिर्यदग्निज्वालालिसंलीढनभोवकाशम् ॥ ५६ ॥

स्वरोमकूपोद्गतविस्फुलिङ्गप्रचारसंदीपितसर्वलोकम् ।
जम्भादृग्जृम्भितशम्भुदम्भसंस्तम्भनारम्भकदन्तपंपम् ॥ ५७ ॥

मा भूदकाण्डे प्रलयो महात्मन् कोपं नियच्छेति गृणद्भिरारात् ।
ससाध्वसैः प्राञ्जलिभिः सगात्रकम्पैर्विरिञ्च्यादिभिरर्थ्यमानम् ॥ ५८ ॥

विलोक्य विद्युच्चपलोग्रजिह्वं यतिक्षितीशः पुरतो नृसिंहम् ।
अनीतिरैडिष्ट तदोपकण्ठं स्थितोऽपि हर्षाश्रुपिनद्धकण्ठः ॥ ५९ ॥

नरहरे हर कोपमनर्थदं तव रिपुर्निहतो भुवि वर्तते ।
कुरु कृपां मयि देव सनातनीं जगदिदं भयमेति भवद्दृशा ॥ ६० ॥

तव वपुः किल सत्त्वमुदाहृतं तव हि कोपनमण्वपि नोचितम् ।
तदिह शान्तिमवाप्नुहि शर्मणे हरगुणं हरिराश्रयते कथम् ॥ ६१ ॥

सकलभीतिषु दैवतमस्मरन् सकलभीतिमपोह्य सुखी पुमान् ।
भवति किं प्रवदामि तवेक्षणे परमदुर्लभमेव तवेक्षणम् ॥ ६२ ॥

स्तुवतस्तव पादसरोरुहं स्तुवतः पुरुषस्य विमुक्तता ।
तव कराभिहतोऽसृत भैरवो न हि स एव पुनर्भवमेष्यति ॥ ६३ ॥

दितिजस्तनुममुं व्यसनार्दितं सकृदरक्षदुदारगुणो भवान् ।
सकलगात्रमुदीरितमस्फुटं प्रकटमेव विधित्सुरभूत्पुरः ॥ ६४ ॥

सृजसि विश्वमिदं रजसाऽऽवृतः स्थितिविधौ श्रितसत्त्व उदायुधः ।
अवसि तद्धरणे तमसाऽऽवृतो हरसि देव तदा हरसंज्ञितः ॥ ६५ ॥

तव जनिर्न गुणास्तव तत्त्वतो जगदनुग्रहणाय भवादिकम् ।
तव पदं खलु वाङ्मनसातिगं श्रुतिवचश्चकितं तव बोधकम् ॥ ६६ ॥

नरहरे तव नामपरिश्रवात् प्रमथगुह्यकदुष्टपिशाचकाः ।
अपसरन्ति विभोऽसुरनायका न हि पुरःस्थितये प्रभवन्त्यपि ॥ ६७ ॥

त्वमेव सर्गस्थितिहेतुरस्य त्वमेव नेता नृहरेऽखिलस्य ।
त्वमेव चिन्त्यो हृदयेऽनवद्ये त्वामेव चिन्मात्रमहं प्रपद्ये ॥ ६८ ॥

हतो वराको हि रुषं नियच्छ विश्वस्य भूमन्नभयं प्रयच्छ ।
एते हि देवाः शममर्थयन्ते निरीक्ष्य भीताः प्रतिखेदयन्ते ॥ ६९ ॥

द्रष्टुं न शक्या हि तवानुकम्पाहीनैर्जनैर्निह्नुतकोटिशंपाम् ।
मूर्तिं तदारमन्नुपसंहरेमां पाहि त्रिलोकीं समतीतसीमाम् ॥ ७० ॥

कल्पान्तोज्जृम्भमाणप्रमथनरिपुढप्रौढलालाटवह्नि-
ज्वालालीढत्रिलोकीजनितचटचटाध्वानधिक्कारधुर्यः ।
मध्ये ब्रह्माण्डभाण्डोदरकुहरमनेकान्त्यदुःस्थामवस्थां
स्त्यानस्त्यानो ममायं दलयतु दुरितं श्रीनृसिंहाट्टहासः ॥ ७१ ॥

मध्ये व्यानद्धवातंधयगुणवलनाधानमन्थानभूभृन्
मन्थेनोरस्थोमिदुग्धोदधिलहरिमिथः स्फालनाघारघोरः ।

कल्पान्तोद्भिद्ररुद्रोद्धततरडमरुकध्वानवद्धाम्भयो
घोषोऽयं कर्णघोरः क्षपयतु नृहरे रंहसा संहृतिं नः ॥ ७२ ॥

क्षुन्दानो मङ्क्षु कल्पावधिमयमदसमुज्जृम्भदम्भोदगुम्भ-
स्फूर्जद्दम्भोलिसद्यस्फुरदुरुटिनात्सर्वगर्वप्ररोहान् ।
क्रीडाक्रोडेन्द्रघोणासरभसविसरद्घोरघूर्घोरवश्री-
गम्भीरस्तेऽट्टहासो हर हर नृहरे रंहसांऽहांसि हन्यात् ॥ ७३ ॥

एवं विशिष्टनुतिभिर्नृहरौ प्रशान्ते
स्वं भावमेत्य मुनिरेष बभूव शान्तः ।
स्वप्नानुभूतमिव शान्तमनाः स्मरंस्त-
मात्मानमात्मगुरवे प्रणतिं चकार ॥ ७४ ॥

चारित्र्यमेतत्प्रयतस्त्रिसन्ध्यं भक्त्या पठेद्यः शृणुयादवन्ध्यम् ।
तीर्त्वाऽपमृत्युं प्रतिपद्य भक्तिं स भुक्तभोगः समुपैति मुक्तिम् ॥ ७५ ॥

इति श्रीमाधवीये तदुग्रभैरवनिर्जयः ।
संक्षेपशङ्करजये सर्ग एकादशोऽभवत् ॥

(आदित श्लोकाः-१२२३)

—:X:—

## ॥ द्वादशः सर्गः ॥

### ( हस्तामलकादीनां शिष्यत्वेन ग्रहणम् )

अथैकदाऽसौ यतिसार्वभौमस्तीर्थानि सर्वाणि चरन् सतीर्थ्यैः ।
घोरात् कलेर्गोपितधर्मगागाङ्गोकर्णमभ्यर्णचलार्णवौघम् ॥ १ ॥

विरिञ्चनाम्भोरुहनाभवन्द्यं प्रपञ्चनाट्यादृभुतसूत्रधारम् ।
तुष्टाव वामार्धवधूटिमत्तदुष्टावलेपं प्रणमन् महेशम् ॥ २ ॥

वपुः स्मरामि क्वचन स्मरारेर्वेलाहकार्द्धनवदावदर्थि ।
सौदामिनीसाधितसम्प्रदायसमर्थनादेशिकमन्यनर्थ ॥ ३ ॥

वामाङ्कसीमाङ्कुरदंशुतुण्याचञ्चन्मृगाञ्चत्तदक्षपाणि ।
सव्यान्यशोभाकलमाग्रमक्षसाकाङ्क्षकीरान्यकरं महोऽस्मि ॥ ४ ॥

महीध्रकन्यागलसङ्गतोऽपि माङ्गल्यतन्तुः किल हालहालम् ।
यत्कण्ठदेशेऽकृत कुण्ठशक्तिमस्यानुभावादहमस्मि भूमा ॥ ५ ॥

गुणत्रयातीतविभाव्यमित्थं गोकर्णनाथं वचसाऽर्चयित्वा ।
तिस्रः स रात्रीस्त्रिजगत्पवित्रे क्षेत्रे मुदं प्रक्षिपति स्म कालम् ॥ ६ ॥

वैकुण्ठकैलासविवर्तभूतं हरत्नाघं हरिशङ्कराख्यम् ।
दिव्यस्थलं देशिकसार्वभौमस्तीर्थप्रवासी नचिरादयासीत् ॥ ७ ॥

भ्रमापनोदाय भिदावदानामद्वैतमुद्रामिह दर्शयन्तौ ।
आराध्य देवौ हरिशङ्करौ स द्वयर्थामिरित्यर्चयति स्म वाग्भिः ॥ ८ ॥

वन्दं महासोमकलाविलासं वामार्द्धगेणाऽऽकलयन्ननादिम् ।
मैनं महः किंचन दिव्यमङ्गीकुर्वन् विश्वं कुशलानि कुर्यात् ॥ ९ ॥

यो मन्दरागं दधदादितेयान् सुधाभुजः स्मानुते विषादी ।
स्वामद्रिलीलोचितचारुपूर्ते कृपामपारां स भवान् विधत्ताम् ॥ १० ॥

उल्लासयन्यो महिमानमुच्चैः स्फुरद्वराहीशकलेवरोऽभूत् ।
तस्मै विदध्मः करयोरजस्रं सायन्तनाम्भोरुहसामरस्यम् ॥ ११ ॥

समावहन् केसरितां वरां यः सुरद्विपत्कुञ्जरमाजघान ।
प्रह्लादमुल्लासितमादधानं पञ्चाननं तं प्रणुमः पुराणम् ॥ १२ ॥

उदेतु बल्याहरणाभिलाषी यो वामनो हार्यजिनं वसानः ।
तपांसि कान्तारहितो व्यतानीदाद्योऽवतादाश्रमिणामयं नः ॥ १३ ॥

येनाधिकोद्यत्तरवारिणाऽऽशु जितोऽर्जुनः सङ्गररङ्गभूमौ ।
नक्षत्रनाथस्फुरितेन तेन नाथेन केनापि वयं सनाथाः ॥ १४ ॥

विलासिनाऽलीकभवेन धाम्ना कामं द्विपन्तं स दशास्यमस्यन् ।
देवो धरापत्यकुचोष्मसाक्षी देयादमन्दात्मसुखानुभूतिम् ॥ १५ ॥

उत्तालकेतुः स्थिरधर्ममूर्तिर्हालाहलस्वीकरणोग्रकण्ठः ।
स रोहिणीशानिशचुम्ब्यमाननिजोत्तमाङ्गोऽवतु कोऽपि भूमा ॥ १६ ॥

विनायकेनाऽऽकलिताहितापं निषेदुषोत्सङ्गभुवि प्रहृष्यन् ।
यः पूतनामोहकचित्तवृत्तिरव्यादसौ कोऽपि कलापभूपः ॥ १७ ॥

पाठीनकेतोर्जयिने प्रतीतसर्वज्ञभावाय दयैकसीम्ने ।
प्रायः क्रतुद्वेषकृतादराय बोधैकधाम्ने स्पृहयामि भूम्ने ॥ १८ ॥

व्यतीत्य चेतो विषयं जनानां विद्योतमानाय तमोनिहन्त्रे ।
भूम्ने सदावासकृताश्रयाय भूयांसि मे सन्तुनमां नमांसि ॥ १९ ॥

वृषाकपायीवरयोः सपर्यां वाचाऽतिमोचारसयेति तन्वन् ।
मुनिप्रवीरो मुदितात्मकामो मूकाम्बिकायाः सदनं प्रतस्थे ॥ २० ॥

अङ्के निधाय व्यसुमात्मजातं महाकुलौ हन्त मुहुः प्ररुद्य ।
तदेकपुत्रौ द्विजदम्पती स दृष्ट्वा दयाधीनतया शुशोच ॥ २१ ॥

अपारमश्रुत्यथ शोकमस्मिन्नभूयतोच्चैरशरीरवाचा ।
जायेत संरक्षितुमक्षमस्य जनस्य दुःखाय परं दयेति ॥ २२ ॥

आकर्ण्य वाणीमशरीरिणीं तामसाविति व्याहरति स्म विज्ञः ।
जगत्त्रयीरक्षणदक्षिणस्य सत्यं तवैकस्य तु शोभते सा ॥ २३ ॥

इतीरयत्येव यतौ द्विजातेः सुतः सुखं सुप्त इवोदतिष्ठत् ।
समीपगैः सर्वजनीनमस्य चारित्र्यमालोक्य विसिस्मिये च ॥ २४ ॥

रम्योपशल्यं कृतमालसालरसालहिन्तालतमालजालैः ।
सिद्धस्थलं साधकसंपदां तन्मूकाम्बिकायाः सदनं जगाहे ॥ २५ ॥

उच्चावचानन्दजबाष्पपूरैरुदीर्णरोमाञ्चमुदारभक्तिः ।
अम्बामहापारकृपावलम्बां संभावयन्नस्तुत निस्तुलं सः ॥ २६ ॥

पारेपरार्धं पदपद्ममास्तु षष्ठ्युत्तरं त्रिशतं तु भासः ।
आश्रित्य वह्न्यर्कसुधामरीचीनालोकयन्त्यादधते जगन्ति ॥ २७ ॥

मन्वश्चतुःषष्ट्युपचारभेदैरन्त्येन सत्काण्डपटप्रदानैः ।
आवाहनाद्यैस्तव देवि नित्यमाराधनामादधते महान्तः ॥ २८ ॥

अम्भोपचारेष्वधिकृत्युपाधि शुद्धाज्ञयोः शुद्धिदमेकमेकम् ।
सहस्रपत्रं द्वितयं च साधु तन्वन्ति धन्यास्तव तोषहेतोः ॥ २९ ॥

आराधनं ते बहिरेव केचिदन्तर्बहिश्चैकतमेऽन्तरेव ।
अन्ये परे त्वम्ब कदापि कुर्युर्नैव त्वदैक्यानुभवैकनिष्ठाः ॥ ३० ॥

अष्टोत्तरत्रिंशति याः कलास्ताः स्वर्धाः कलाः पञ्च निवृत्तिमुख्याः ।
तासामुपर्यम्ब तवाङ्घ्रिपद्मं विद्योतमानं विबुधा भजन्ते ॥ ३१ ॥

कालाग्निरूपेण जगन्ति दग्ध्वा सुधात्मनाऽऽप्लाव्य समुत्सृजन्तीम् ।
ये त्वामखण्डाममृतात्मनैव ध्यायन्ति ते सृष्टिकृतो भवन्ति ॥ ३२ ॥

ये प्रत्यभिज्ञामतपारविज्ञा धन्यास्तु ते प्राग्विदितां गुरूक्त्या ।
सैवाहमस्मीति समाधियोगात् त्वां प्रत्यभिज्ञाविषयं विदध्युः ॥ ३३ ॥

आधारचक्रे च तदुत्तरस्मिन्नाराधयन्त्यैहिकभोगलुब्धाः ।
उपासते च मणिपूरके त्वां वासस्तु तेषां नगराद् बहिस्ते ॥ ३४ ॥

अनाहते देवि भजन्ति ये त्वामन्तःस्थितिस्त्वन्नगरे तु तेषाम् ।
शुद्धाज्ञयोर्ये तु भजन्ति तेषां क्रमेण सामीप्यसमानभोगौ ॥ ३५ ॥

सहस्रपत्रे ध्रुवमण्डलाख्ये सरोरुहे त्वामनुसंदधानः ।
चतुर्विधैक्यानुभवास्तमोहः सायुज्यमभ्याश्नुते साधकेन्द्रः ॥ ३६ ॥

श्रीचक्रषट्चक्रकयोः पुरोऽथ श्रीचक्रमन्त्रयोरपि चिन्तितैक्यम् ।
चक्रस्य मन्त्रस्य तवस्तवैक्यं क्रमादनुध्यायति साधकेन्द्रः ॥ ३७ ॥

इति तां वचनैः प्रपूज्य भैक्ष्यादनमात्रेण स तुष्टिमान् कृतार्थः ।
बहुसाधकसंस्तुतः कियन्तं समयं तत्र निनाय शान्तचेताः ॥ ३८ ॥

श्रयति स्म ततोऽग्रहारकं श्रीबलिसंज्ञं स कदाचन स्वशिष्यैः ।
अनुगेहहुताग्निहोत्रदुग्धप्रसरत्पावनगन्धलोभनीयम् ॥ ३९ ॥

यतोऽपमृत्युर्भयदेव याति भ्रान्त्या प्रदेशं शनकैरलब्ध्वा ।
दृष्ट्वा द्विजानग्निजकर्मनिष्ठान् दूरादापदं त्यजतोऽप्रमत्तान् ॥ ४० ॥

यस्मिन् सहस्रद्वितयं जनानामग्न्याहितानां श्रुतिपाठकानाम् ।
वसत्यवश्यं श्रुतिचोदितासु क्रियासु दक्षं प्रथितानुभावम् ॥ ४१ ॥

मध्ये वसन् यस्य करोति भूषां पिनाकपाणिर्गिरिजासहायः ।
हारस्य मध्ये तरलो यथा वै रात्रिंदिवेन्दुर्गगनाधिरूढः ॥ ४२ ॥

तत्र द्विजः कश्चन शास्त्रवेदी प्रभाकराख्यः प्रथितानुभावः ।
प्रवृत्तिशास्त्रैकरतः सुबुद्धिरास्ते क्रतून्मीलितकीर्तिवृन्दः ॥ ४३ ॥

गावो हिरण्यं धरणी समग्रा सद्बान्धवा ज्ञातिजनाश्च तस्य ।
सन्त्येव किं तैर्न हि तोष एभिः पुत्रो यदस्याजनि मुग्धचेष्टः ॥४४॥

न वक्ति किंचिन्न शृणोति किंचित् ध्यायन्निवास्ते किल मन्दचेष्टः ।
रूपेषु मारो महसा महस्वान् मुखेन चन्द्रः क्षमया महीसमः ॥ ४५ ॥

ग्रहग्रहात् किं जडवद्विचेष्टते किं वा स्वभावादुत पूर्वकर्मणः ।
संचिन्तयंस्तिष्ठति तत्पिताऽनिशं समागतान् प्रष्टुमना बहुश्रुतान् ॥

शिष्यैः प्रशिष्यैर्बहुपुस्तभारैः समागतं कश्चन पूज्यपादम् ।
शुश्राव तं ग्रामगनिन्दितात्मा निनाय सूनुं निकटं स तस्य ॥ ४७ ॥

न शून्यहस्तो नृपमिष्टदैवं गुरुं च यायादिति शास्त्रवित् स्वयम् ।
सोपायनः प्राप गुरुं व्यनिश्रणत् फलं ननामास्य च पादपङ्कजे ॥

अनीनमत्तं च तदीयपादयोर्जडाकृतिं भस्मनिगूढवह्निवत् ।
स नोदतिष्ठत् पतितः पदाम्बुजे प्रायः स्वजाड्यं प्रकटं विधित्सति ॥

उपात्तहस्तः शनकैरवाङ्मुखं तं देशिकेन्द्रः कृपयोदतिष्ठिपत् ।
उत्थापिते स्वे तनये पिताब्रवीत् वद प्रभो जाड्यममुष्य किंकृतम् ॥

वर्षाण्यतीयुर्भगवन्नमुष्य पञ्चाष्ट जातस्य विनाऽवबोधम् ।
नाध्यैष्ट वेदानलिखच्च नार्णानचीकरं चोपनयं कथंचित् ॥ ५१ ॥

क्रीडापरः क्रोशति बालवर्गस्तथापि न क्रीडितुमेष याति ।
बालाः शठा मुग्धमिमं निरीक्ष्य संताडयन्तेऽपि न रोषमेति ॥ ५२ ॥

भुङ्क्ते कदाचिन्न तु जातु भुङ्क्ते स्वेच्छाविहारी न करोति चोक्तम् ।
तथापि रुष्टेन न ताड्यतेऽयं स्वकर्मणा वर्धत एव नित्यम् ॥ ५३ ॥

इतीरयित्वोपरते च विप्रे पप्रच्छ तं शङ्करदेशिकेन्द्रः ।
कस्त्वं किमेवं जडवत् प्रवृत्तः स चाब्रवीद्बालवपुर्महात्मा ॥ ५४ ॥

नाहं जडः किन्तु जडः प्रवर्तते मत्संनिधानेन न सन्दिहे गुरो ।
षडूर्मिषड्भावविकारवर्जितं सुखैकतानं परमस्मि तत्पदम् ॥ ५५ ॥

ममैव भूयादनुभूतिरेषा मुमुक्षुवर्गस्य निरूप्य विद्वन् ।
पद्यैः परैर्द्वादशभिर्बभाषे चिदात्मतत्त्वं विधुतप्रपञ्चम् ॥ ५६ ॥

प्रकाशयन्ते परमात्मतत्त्वं करस्थधात्रीफलवद्यदेकम् ।
श्लोकास्तु हस्तामलकाः प्रसिद्धास्तत्कर्तुराख्यापि तथैव वृत्ता ॥ ५७ ॥

विनोपदेशं स्वत एव जातः परात्मबोधो द्विजवर्यसूनोः ।
व्यस्मेष्ट संप्रेक्ष्य स देशिकेन्द्रो न्यधात्स्वहस्तं कृपयोत्तमाङ्गे ॥ ५८ ॥

सुते निवृत्ते वचनं बभाषे स देशिकेन्द्रः पितरं तदीयम् ।
वस्तुं न योग्यो भवता सहायं न तेऽमुनार्थो जडिमास्पदेन ॥ ५९ ॥

पुराभवाभ्यासवशेन सर्वं स वेत्ति सम्यङ् न च वक्ति किंचित् ।
नाचेत्कथं स्वानुभवैकगर्भपद्यानि भाषेत निरक्षरास्यः ॥ ६० ॥

न सक्तिरस्यास्ति गृहादिगोचरा नात्मीयदेहे भ्रमतोऽस्य विद्यते ।
तादात्म्यवान्न्यत्र ममेति वेदनं यदा न सा स्वे किमु बाह्यवस्तुषु ॥

इतीरयित्वा भगवान् द्विजात्मजं ययौ गृहीत्वा दिशमीप्सितां पुनः ।
विप्रोऽप्यनुव्रज्य ययौ स्वमन्दिरं कियत्प्रदेशं स्थिरधीर्बहुश्रुतः ॥ ६२ ॥

ततः सनानन्दमहेन्द्रपूर्वैः सुपर्ववृन्दैरुपगीयमानः ।
पयाद्भृषिमुख्यैः समभासकामक्षोणीपतिः शृङ्गगिरिं प्रतस्थे ॥ ६३ ॥

यत्राधुनाऽप्युत्तममभ्युपेत्य नवप्रसूत्यात्मभृदन्तरङ्गः ।
संसर्गभासेन निर्वाणभद्रा विधोनते यत्र च तुङ्गभद्रा ॥ ६४ ॥

अभ्यागतार्चोल्लिपितकल्पशाखाः कृतश्रद्धयाधीतसमस्तशाखाः ।
इज्याद्यवैर्यत्र समुल्लसन्तः शान्तान्तराया निवसन्ति सन्तः ॥ ६५ ॥

अध्यापयामास स भाष्यमुख्यान् ग्रन्थान्निजांस्तत्र मनीषिमुख्यान् ।
आकर्णनप्राप्यमहापुमर्थानादिष्ट विद्याग्रहणे समर्थान् ॥ ६६ ॥

मन्दाक्षनम्रं कलयन्नशेषं पराणुदत् प्राणितमांसशेषम् ।
निरस्तजीवेश्वरयोर्विशेषं व्याचष्ट वाचस्पतिनिर्विशेषम् ॥ ६७ ॥

प्रकल्प्य तत्रेन्द्रविमानकल्पं प्रासादमाविष्कृतसर्वशिल्पम् ।
प्रवर्तयामास स देवतायाः पूजामजाद्यैरपि पूजितायाः ॥ ६८ ॥

या शारदाम्बेत्यभिधां वहन्ती कृतां प्रतिज्ञां प्रतिपालयन्ती ।
अद्यापि शृङ्गेरिपुरे वसन्ती प्रद्योततेऽभीष्टवरान् दिशन्ती ॥ ६९ ॥

चित्तानुवर्ती निजधर्मचारी भूतानुकम्पी तनुवाग्विभूतिः ।
कश्चिद्विनेयोऽजनि देशिकस्य यं तोटकाचार्यमुदाहरन्ति ॥ ७० ॥

स्नात्वा पुरा क्षिपति कम्बलवस्त्रमुख्यै-
रभ्यासनं मृदु समं स ददाति नित्यम् ।
संलक्ष्य दन्तपरिशोधनकाष्ठमग्र्यं
बाह्यादिकं गतवते सलिलादिकं च ॥ ७१ ॥

श्रीदेशिकाय गुरवे तनुमार्जवस्त्रं विश्राणयत्यनुदिनं विनयोपपन्नः ।
श्रीपादपद्मयुगमर्दनकोविदश्च छायेव देशिकमसौ भृशमन्वयाद्यः ॥

गुरोः समीपे न तु जातु जृम्भते प्रसारयन्नो चरणौ निषीदति ।
नोपेक्षते वा बहु वा न भाषते न पृष्ठदर्शी पुरतोऽस्य तिष्ठति ॥७३॥

तिष्ठन् गुरौ तिष्ठति संप्रयाते गच्छन् प्रलापे विनयेन शृण्वन् ।
मनुष्यमानोऽपि हितं विधत्ते यथाहितं तच्च तनोति नास्य ॥ ७४ ॥

तस्मिन् कदाचन विनेयवरे स्वशाटीप्रक्षालनाय गतवत्यपवर्तनीगाः ।
व्याख्यानकर्मणि तदागममीक्षमाणो भक्तेषु वत्सलतया विललम्ब एषः ॥

शान्तिपाठमथ कर्तुमसंख्येपूद्यतेषु स विनेयवरेषु ।
स्थीयतां गिरिरपि क्षणमात्रादेष्यतीति समुदीरयति स्म ॥ ७६ ॥

तां निशम्य निगमान्तगुरूक्तिं मन्दधीरनधिकार्यपि शास्त्रे ।
किं प्रतीक्ष्यत इति स्म ह भित्तिः पद्मपादमुनिना समदर्शि ॥ ७७ ॥

तस्य गर्वमपहर्तुमखर्वं स्वाश्रयेषु करुणातिशयाच्च ।
व्यादिदेश स चतुर्दश विद्याः सद्य एव मनसा गिरिनाम्ने ॥ ७८ ॥

सोऽधिगम्य तदनुग्रहमग्र्यं तत्क्षणेन विदिताखिलविद्यः ।
ऐट्ट देशिकवरं परतत्त्वव्यञ्जकैर्ललिततोटकवृत्तैः ॥ ७९ ॥

श्रीमद्देशिकपादपङ्कजयुगीमूला तदेकाश्रया
तत्कारुण्यसुधावसेकसहिता तद्भक्तिसद्वल्लरी ।
हृद्यं तोटकवृत्तवृन्तरुचिरं पद्यात्मकं सत्फलं
लेभे भोक्तुमनोतिसत्तमशुकैरास्वाद्यमानं मुहुः ॥ ८० ॥

येनौन्नत्यमवापिता कृतपदा कामं क्षमायामियं
निःश्रेणिः पदमुन्नतं जिगमिषोर्व्योम स्पृशन्ती परम् ।
यस्या काप्यधरीकृतत्रिभुवनश्रेणी गुरूणां कथं
सेवा तस्य यतीशितुर्न विरलं कुर्वीत गुर्वी तमः ॥ ८१ ॥

अथ तोटकवृत्तपद्यजातैरयमज्ञातसुपर्वसूक्तिकोपि ।
स्तुवन्नेव गुरोस्त्रयीशिरोऽर्थं स्फुटयन्नाथ विचक्षणः सतीर्थ्यैः ॥ ८२ ॥

अथ तस्य सुधस्य वाक्यगुम्फं निशमय्यामृतमाधुरीधुरीणम् ।
जलजांघ्रिमुखाः सतीर्थ्यवर्याः स्मयमन्वस्य सविस्मया बभूवुः ॥ ८३ ॥

भक्त्युत्कर्षात् प्रादुरासन्यतोऽस्मात्पद्यान्येवं तोटकाख्यानि सन्ति ।
तस्मादाहुस्तोटकाचार्यमेनं लोके शिष्टाः शिष्टवंश्यं मुनीन्द्रम् ॥ ८४ ॥

अद्यापि तत्प्रकरणं ग्रथितं पृथिव्यां तत्संज्ञया लघु महार्थमनल्पनीति ॥
शिष्टैर्गृहीतमतिशिष्टपदानुविद्धं वेदान्तवेद्यपरतत्त्वनिवेदनं यत् ॥ ८५ ॥

तोटकाह्वयमवाप्य महर्षेः ख्यातिमाप स दिशासु तदादि ।
पद्मपादसदृशप्रतिभावान्मुख्यशिष्यपदवीमपि लेभे ॥ ८६ ॥

पुमर्थाश्चत्वारः किमुत निगमा ऋक्प्रभृतयः
　प्रभेदा वा मुक्तेर्विमलतरसालोक्यमुखराः ।
मुखान्याहो धातुश्चिरमिति विमृश्याथ विबुधा
　विदुः शिष्यान् हस्तामलकमुखराञ्छङ्करगुरोः ॥ ८७ ॥

स्फारद्वारप्रधाणद्विरदमदसमुल्लोलकल्लोलभृङ्गी-
　सङ्गीतोल्लासभङ्गीमुखरितहरितः संपदोऽर्किपचानैः ।
निश्चीयन्तेऽतिदूरादधिगतभगवत्पादसिद्धान्तकाष्ठा-
　निष्ठासम्पद्विजृम्भन्निरवधिसुखदस्वात्मलाभैकलोभैः ॥ ८८ ॥

समिन्धानो मन्थाचलमथितसिन्धूद्भव-
　स्सुधाफेनाभेनामृतरुचिनिभेनाऽस्मयशसा ।
निरुन्धानो दृष्ट्या परमहह पन्थानमसतां
　पराधृष्यैः शिष्यैस्समत विशिष्यैष मुनिराट् ॥ ८९ ॥

इति श्रीमाधवीये तद्धस्तधात्र्यादिसंश्रयः ।
संक्षेपशङ्करजये सर्गोऽयं द्वादशोऽभवत् ॥

( आदितः श्लोकाः—१३१२ )

## ॥ त्रयोदशः सर्गः ॥

### ( ब्रह्मविद्याप्रचारः )

ततः कदाचित् प्रणिपत्य भक्त्या सुरेश्वरार्यो गुरुमात्मदेशम्
शारीरकेऽत्यन्तगभीरभावे वृत्तिं स्फुटं कर्तुमना जगाद ॥ १ ॥

मम यत्करणीयमस्ति ते त्वमिमं मामनुशाध्यसंशयम् ।
तदिदं पुरुषस्य जीवितं यदयं जीवति भक्तिमान् गुरौ ॥ २ ॥

इतीरिते शिष्यवरेण शिष्यं प्रोचे गरीयानतिहृष्टचेताः ।
मत्कस्य भाष्यस्य विधेयमिदं निबन्धनं वार्तिकनामधेयम् ॥ ३ ॥

द्रष्टुं सतर्कं भवदीयभाष्यं गम्भीरवाक्यं न ममास्ति शक्तिः ।
तथाऽपि भावत्ककटाक्षपाते यते यथाशक्ति निबन्धनाय ॥ ४ ॥

अस्त्वेवमित्यार्यपदाम्यनुज्ञामादाय मूर्ध्ना स विनिर्जगाम ।
अथाम्बुजाङ्घ्रेर्दयिताः सतीर्थ्यास्तं चित्सुखाद्या रहसीत्यमूचुः ॥ ५ ॥

योऽयं प्रयत्नः क्रियते हिताय हिताय नायं विफलत्वनर्थम् ।
प्रत्येकमेवं गुरवे निवेद्य योद्धा स्वयं कर्मणि तत्परश्च ॥ ६ ॥

यः सार्वलौकिकमपीश्वरमीश्वराणां प्रत्यादिदेश बहुयुक्तिभिरुत्तरज्ञः ।
कर्मैव नाकनरकादिफलं ददाति नैवं परोऽस्ति फलदो जगदीशितेति ।

प्रत्येकमस्य प्रलयं वदन्ति पुराणवाक्यानि स तस्य कर्ता ।
व्यासो मुनिर्जैमिनिरस्य शिष्यस्तत्पक्षपाती प्रलयावलम्बी ॥ ८ ॥

गुरोश्च शिष्यस्य च पक्षभेदे कथं तयोः स्याद्गुरुशिष्यभावः ।
तथाऽपि यद्यस्ति स पूर्वपक्षः सिद्धान्तभावस्तु गुरूक्त एव ॥ ९ ॥

आ जन्मनः स खलु कर्मणि योजितात्मा
कुर्वन्नवस्थित इहानिशमेव कर्म ।
ब्रूते परांश्च कुरुतावहिताः प्रयत्नात्
स्वर्गादिकं सुखमवाप्स्यथ किं वृथाध्वे ॥ १० ॥

एवंविधेन क्रियते निबन्धनं यदि त्वदाज्ञामवलम्ब्य भाष्यके ।
भाष्यं परं कर्मपरं स योक्ष्यते मा व्याधि मूलादपि वृद्धिमिच्छता ॥

संन्यासमप्येष न बुद्धिपूर्वकं व्यधत्त वादे विजितो वशो व्यधात् ।
तस्मान्न विश्वासपदं विभाति नो मा चीकरोऽनेन निबन्धनं गुरो ॥

यः शक्नुयात् कर्म विधातुमीप्सितं सोऽयं न कर्माणि विहातुमर्हति ।
यद्यस्ति संन्यासविधौ दुराग्रहो जात्यन्धमूकादिरमुष्य गोचरः ॥ १३ ॥

एवं सदा भट्टमतानुसारिणो भुवन्त्यसौ तन्मतपक्षपातवान् ।
एवं स्थिते योग्यमदो विधीयतां न नोऽस्ति निर्बन्धनमत्र किञ्चन ॥

पुरा किलास्मासु सुरापगायाः पारे परस्मिन् विचरत्सु सत्सु ।
आकारयामास भवानशेषान् भक्तिं परिज्ञातुमिवास्मदीयाम् ॥ १५ ॥

तदा तदाकर्ण्य समाकुलेषु नावर्थमस्मासु परिभ्रमत्सु ।
सनन्दनस्त्वेष वियत्तटिन्या क्षरीममिप्रस्थित एव तूर्णम् ॥ १६ ॥

अनन्यसाधारणमस्य भावमाचार्यवर्ये भगवत्यवेक्ष्य ।
तुष्टा त्रिवर्त्मा कनकाम्बुजानि प्रादुष्करोति स्म पदे पदे च ॥ १७ ॥

पदानि तेषु प्रणिधाय युष्मत्सकाशमागाद्यदयं महात्मा ।
ततोऽतितुष्टो भगवांश्चकार नाम्ना तमेनं किल पद्मपादम् ॥ १८ ॥

स एव युष्मच्चरणारविन्दसेवाविनिर्धूतसमस्तभेदः ।
आजानसिद्धोऽर्हति सूत्रभाष्ये वृत्तिं विधातुं भगवन्नगाधे ॥ १९ ॥

यद्वाऽयमानन्दगिरिर्यदुग्रतपःप्रसन्ना परमेष्ठिपत्नी ।
भवत्प्रबन्धेषु यथाभिसन्धि व्याख्यानसामर्थ्यवरं दिदेश ॥ २० ॥

कर्मैकतानमतिरेष कथं गुरो ते विश्वासपात्रमवपद्यत विश्वरूपः ।
भाष्यस्य पद्मपद एव करोतु टीकामित्यूचिरे रहसि योगिवरं विधेयाः

अत्रान्तरेऽभ्यर्णगतः स तूर्णं सनन्दनो वाक्यमुदाजहार ।
आचार्य हस्तामलकोऽपि कल्यो भवत्कृतौ वार्तिकमेष कर्तुम् ॥ २२

यतः करस्थामलकाविशेषं जानाति सिद्धान्तमसावशेषम् ।
अतो ह्यमुष्मै भवतैव पूर्वमदायि हस्तामलकाभिधानम् ॥ २३ ॥

वाणीं समाकर्ण्य सनन्दनस्य सामिस्मितं भाष्यकृदाचचक्षे ।
नैपुण्यमन्यादृशमस्य किन्तु समाहितत्वान्न बहिःप्रवृत्तिः ॥ २४ ॥

अयं तु बाल्ये न पपाठ पित्रा नियोजितः सादरमक्षराणि ।
न चोपनीतोऽपि गुरोः सकाशादध्यैष्ट वेदान् परमार्थनिष्ठः ॥ २५ ॥

बालैर्न चिक्रीड न चान्नमैच्छन्न चारुवाचं ह्यवदत् कदाऽपि ।
निश्चित्य भूतोपहतं तमेनमानिन्यिरेऽस्मन्निकटं कदाचित् ॥ २६ ॥

अस्मानवेक्ष्यैव मुहुः प्रणम्य कृताञ्जलौ तिष्ठति बालकेऽस्मिन् ।
इमामपूर्वां प्रकृतिं विलोक्य विसिस्मिये तत्र जनः समेतः ॥ २७ ॥

कस्त्वं शिशो कस्य सुतः कुतो वेत्यस्माभिराचष्ट किलैष पृष्टः ।
आत्मानमानन्दघनस्वरूपं विस्मापयन् वृत्तमयैर्वचोभिः ॥ २८ ॥

यदा कदाऽप्यश्रुतिगोचरं तदाकर्ण्य वाग्वैभवमात्मजस्य ।
पिता प्रपद्यास्य परं प्रहर्षं सप्रश्रयां वाचमुवाच विप्रः ॥ २९ ॥

जनैर्जडत्वेन विनिश्चितोऽपि ब्रवीति यद्येष परात्मतत्त्वम् ।
महोन्नतानामपि दुर्विभाव्यं किं वर्ण्यतेऽर्हन् भवतः प्रभावः ॥ ३० ॥

आ जन्मनः संसृतिपाशमुक्तः शिष्योऽस्त्ययं विश्वगुरोस्तवैव ।
प्रफुल्लराजीववने विहारी कथं रमेत क्षुरके मरालः ॥ ३१ ॥

विज्ञाप्य तस्मिन्निति निर्गतेऽस्मौ तदाप्रभृत्यत्र वसत्युदारः ।
आ शैशवादात्मविलीनचेताः कथं प्रवर्तेत महाप्रबन्धे ॥ ३२ ॥

श्रुत्वेति पप्रच्छुरमुं विनेयाः स्वामिन् विनैव श्रवणाद्युपायैः ।
अलब्ध विज्ञानमयं कथं वा भवानिदं साधु विदांकरोतु ॥ ३३ ॥

तानब्रवीत् संयमिचक्रवर्ती कश्चित् पुरा यामुनतीरवर्ती ।
बभूव सिद्धः किल साधुवृत्तः सांसारिकेभ्यः सुतरां निवृत्तः ॥ ३४ ॥

तस्यान्तिके काचन विप्रकन्या विहायनं जातु निवेश्य बालम् ।
क्षणं प्रतीक्षस्व शिशुं द्विजेति स्नातुं सखीभिः सह निर्जगाम ॥ ३५ ॥

अत्रान्तरे दैववशात्स बालश्चङ्क्रम्यमाणो निपपात नद्याम् ।
मृतं तमादाय शिशुं तदीयाश्चक्रन्दुरुच्चैः पुरतो महर्षेः ॥ ३६ ॥

आक्रोशमाकर्ण्य मुनिः स तेषामत्यन्तखिन्नो निजयोगभूम्ना ।
प्राविक्षदङ्गं पृथुकस्य तस्य स एष हस्तामलकस्तपस्वी ॥ ३७ ॥

तस्मादयं वेद विनोपदेशं श्रुतीरनन्ताः सकलाः स्मृतीश्च ।
सर्वाणि शास्त्राणि परं च तत्त्वमज्ञातमेतेन न किञ्चिदस्ति ॥ ३८ ॥

तथात्मारामो न बहिःप्रवृत्तो नियोगमर्हत्ययमत्र धुर्यो ।
स मण्डनस्त्वर्हति वृद्धतत्त्वः सारस्वतीसात्त्विकसर्ववित्त्वः ॥ ३९ ॥

तथाऽऽदशात्युज्ज्वलकीर्तिराशिः समस्तशास्त्रार्णवपारदर्शी ।
आसादितो धर्महितः प्रयत्नात् स चेन्न रोचेत न दृश्यतेऽन्यः ॥ ४० ॥

अहं बहूनामनभीष्टकार्यं न कारयिष्ये हि महानिबन्धे ।
किं चात्र संशीतिरभून्ममातो यदेककार्ये बहवः प्रवीणाः ॥ ४१ ॥

भवन्निदेशाद्भगवन् सनन्दनः करिष्यते भाष्यनिबन्धमीप्सितम् ।
स ब्रह्मचर्यादुररीकृताश्रमो मतिप्रकर्षो विदितो हि सर्वतः ॥ ४२ ॥

सनन्दनो नन्दयिता जनानां निबन्धमेकं विदधातु भाष्ये ।
न वार्तिकं तत्तु परप्रतिज्ञं व्यधात् प्रतिज्ञां स हि नूत्नदीक्षः ॥ ४३ ॥

आदिश्येत्थं शिष्यसङ्घं यतीन्द्रः प्रोवाचेत्थं नूत्नभिक्षुं रहस्याम् ।
भाष्ये भिक्षो मा कृथा वार्तिकं त्वं नेमे शिष्याः सेहिरे दुर्विदग्धाः ॥

तात्पर्यं ते गेहिधर्मेषु दृष्ट्वा तत्संस्कारं सांप्रतं शङ्कमानाः ।
भाष्ये कृत्वा वार्तिकं योजयेत्स भाष्यं प्राहुः स्वीयसिद्धान्तशेषम् ॥

नास्त्येवासावाश्रमस्तुर्य इत्थं सिद्धान्तोऽयं तावको वेदसिद्धः ।
द्वारि द्वाःस्थैर्वारिता भिक्षमाणा वेश्मान्तस्ते न प्रवेशं लभन्ते ॥ ४६ ॥

इत्याद्यां तां किंवदन्तीं विदित्वा तेषां नाऽऽसीत्प्रत्ययस्त्वय्यनल्पे ।
स्वातन्त्र्याच्च ग्रन्थमेकं महात्मन् कृत्वा मह्यं दर्शयाध्यात्मनिष्ठम् ॥

विद्वन् यद्वत्प्रत्ययः स्यादमीषां शिष्याणां नो ग्रन्थसंदर्शनेन ।
इत्युक्त्वैनं वार्तिकं सूत्रभाष्ये नाभूद्वाहेत्याप खेदं च किञ्चित् ॥ ४८ ॥

शिष्योक्तिभिः शिथिलितात्ममनोरथोऽसा-
वेनं स्वतन्त्रकृतिनिर्मितये न्ययुङ्क्त ।
नैष्कर्म्यसिद्धिमचिराद्विदधत्स चेत्थं
न्याय्यामविन्दत सुरेश्वरदेशिकाख्याम् ॥ ४९ ॥

नैष्कर्म्यसिद्धिमथ तां निरवद्ययुक्तिं निष्कर्मतत्त्वविषयावगतिप्रधानाम् ।
आपन्नहृद्यपदबन्धवतीमुदारामाद्यन्तमैक्षततरां परितुष्टचेताः ॥ ५० ॥

ग्रन्थं दृष्ट्वा मोदमानो मुनीन्द्रस्तं चान्येभ्यो दर्शयामास हृद्यम् ।
तेषां चाऽऽसीत्प्रत्ययस्तद्वदस्मिन् यद्वान्यस्तत्त्वविदः स नेति ॥ ५१ ॥

यत्राद्यापि श्रूयते मस्करीन्द्रैर्निष्कर्माऽऽत्मा यत्र नैष्कर्म्यसिद्धिः ।
तन्नाम्नाऽयं यद्बबन्धे ग्रन्थवर्यस्तन्माहात्म्यात् सर्वलोकादृतोऽभूत् ॥ ५२ ॥

आचार्यवाक्येन विधित्सितेऽस्मिन् विघ्नं यदन्ये व्यधुरुल्ससर्ज ।
शापं कृतेऽस्मिन् कृतमप्युदारैः तद्वार्तिकं न प्रसरेत् पृथिव्याम् ॥ ५३ ॥

नैष्कर्म्यसिद्ध्याख्यनिबन्धमेकं कृत्वाऽऽत्मपूज्याय निवेद्य चाऽऽप्त्वा ।
विश्वासमुक्त्वाऽथ पुनर्बभाषे स विश्वरूपो गुरुमात्मदेवम् ॥ ५४ ॥

न ख्यातिहेतोर्न च लाभहेतोर्नाभ्यर्चनायै विहितः प्रबन्धः ।
नोल्लङ्घनीयं वचनं गुरूणां नोल्लङ्घने स्याद्गुरुशिष्यभावः ॥ ५५ ॥

पूर्वं गृहित्वेऽपि न तत्स्वभावो न बाल्यमन्वेति हि यौवनस्थम् ।
न यौवनं वृद्धमुपैति तद्वत् व्रजन् हि पूर्वस्थितिमोज्झ्य गच्छेत् ॥

अहं गृही नात्र विचारणीयं किं ते न पूर्वं मन एव हेतुः ।
बन्धे च मोक्षे च मनोविशुद्धो गृही भवेद्वाऽप्युत मस्करी वा ॥ ५७ ॥

नास्त्येव वेदाश्रम उत्तमाऽऽदिः कथं च तस्माद्विनिवृत्तिगामिनौ ।
प्रतिश्रवौ नौ कथमल्पकालौ न हि प्रतिज्ञा भगवन्निरुद्धा ॥ ५८ ॥

संभिक्षमाणा न लभन्त एव चेद्गृहप्रवेशं गुरुणा प्रवेशनम् ।
कथं हि भिक्षा विहिता ननूत्तमा को नाम लोकस्य मुखापिधायकः ॥

तत्त्वोपदेशाद्विदितात्मतत्त्वो व्यधामहं संन्यसनं कृतात्मा ।
विरागभावान्न पराजितस्तु वादो हि तत्त्वस्य विनिर्णयाय ॥ ६० ॥

पुरा गृहस्थेन मया प्रबन्धा नैयायिकादौ विहिता महार्घाः ।
इतः परं मे हृदयं चिकीर्षु त्वदंघ्रिसेवां न विलङ्घ्य किञ्चित् ॥ ६१ ॥

श्रद्धामर्दनबद्धादरबुधपरिषच्छेमुषीसंनिषण्णा-
मर्वाग्दुर्वादिगर्वानलविपुलतरज्वालमालावलीढाम् ।

सिक्त्वा सूक्तामृतौघैरहह परिहसञ्जीवयस्यद्य सद्यः
को वा सेवापटुः स्याद्रणतरणविधौ सद्गुरोर्नैव जाने ॥ ६२ ॥

इत्युक्त्वोपरते सुरेश्वरगुरौ तेनैव शारीरके
नो संभाव्यहहात्र वार्तिकमिति प्रौढं शुगग्नि शनैः ।
धीराग्र्यः शमयन्विवेकपयसा देवेश्वरेण त्रयी-
भाष्ये कारयितुं स वार्तिकयुगं वद्धादरोऽभून्मुनिः ॥ ६३ ॥

भाष्यानुकारिमृदुवाक्यनिवेशितार्थं स्वीयैः पदैः सह निराकृतपूर्वपक्षम् ।
सिद्धान्तयुक्तिविनिवेशिततत्त्वरूपं दृष्ट्वाऽभिनन्द्य परितोषवशादवोचत् ॥

सत्यं यदात्थ विनयिन् मम याजुषी या
शाखा तदन्तगतभाष्यनिबन्ध इष्टः ।
तद्वार्तिकं मम कृते भवता प्रणेयं
सचेष्टितं परहितैकफलं प्रसिद्धम् ॥ ६५ ॥

तद्वत्त्वदीया खलु काण्वशाखा ममापि तत्रास्ति तदन्तभाष्यम् ।
तद्वार्तिकं चापि विधेयमिष्टं परोपकाराय सतां प्रवृत्तिः ॥ ६६ ॥

तत्रोभयत्र कुरु वार्तिकमार्तिहारि
कीर्तिं च याहि जितकार्तिकचन्द्रिकाभाम् ।
मा शङ्कि पूर्वमिव दुःशठवाक्यरोधो
मद्वाक्यमेव शरणं व्रज मा विचारीः ॥ ६७ ॥

इत्थं स उक्तो भगवत्पदेन श्रीविश्वरूपो विदुषां वरिष्ठः ।
चकार भाष्यद्वयवार्तिके द्वे आज्ञा गुरूणां ह्यविचारणीया ॥ ६८ ॥

आज्ञा गुरोरनुचरेन हि लङ्घनीयेत्युक्त्वा तयोर्निगमशेखरयोरुदारम् ।
निर्माय वार्तिकयुगं निजदेशिकाय निःसीमनिस्तुलनधीरपदं चकार ॥

सनन्दनो नाम गुरोरनुज्ञया भाष्यस्य टीकां व्यधितेरितः पराम् ।
यत्पूर्वभागः किल पञ्चपादिका तच्छेषगा वृत्तिरिति प्रथीयसी ॥ ७० ॥

व्यासर्षिसूत्रनिचयस्य विवेचनाय टीकामिमं विजयडिण्डिममात्मकीर्तेः ।
निर्माय पद्मचरणो निरवद्ययुक्तिहृद्यं प्रबन्धमकरोद्गुरुदक्षिणां सः ॥

आलोचयन्नथ तदा तु गतिं ग्रहाणामूचे सुरेश्वरसमाह्वयमुपह्वरे सः ।
पञ्चैव यस्य चरणाः प्रथिता इह स्युस्तत्रापि सूत्रयुगलद्वयमेव भूम्ना ॥

प्रारब्धकर्मपरिपाकवशात् पुनस्त्वं
वाचस्पतित्वमधिगम्य वसुन्धरायाम् ।
मध्यां विधास्यसितमां मम भाष्यटीका-
माभूतसंलयमविक्षिति सा च जीयात् ॥ ७३ ॥

इत्येवमुक्त्वाऽथ यतीश्वरोऽस्मादानन्दगिर्यादिमुनीन् स ह्रुत्वा ।
कुरुध्वमद्वैतपरान्निबन्धानित्यन्वशान्निर्ममसार्वभौमः ॥ ७४ ॥

ते सर्वेऽप्यनुमतिमाप्य देशिकेन्द्रो-
रानन्दाचलमुखरा महानुभावाः ।
आतेनुर्जगति यथास्वमात्मतत्त्वा-
म्भोजार्कान् विशदतरान् बहून्निबन्धान् ॥ ७५ ॥

इति श्रीमाधवीये तद्वार्तिकान्तप्रवर्तनः ।
संक्षेपशङ्करजये पूर्णः सर्गस्त्रयोदशः ॥

( आदितः श्लोकाः १३८७ )

## ॥ चतुर्दशः सर्गः ॥

—।×।—

### (पद्मपादतीर्थयात्रावर्णनम्)

अथाब्जपात् कर्तुमनाः स तीर्थयात्रामयाचिष्ट गुरोरनुज्ञाम् ।
देया गुरो मे भगवन्ननुज्ञा देशान् दिदृक्षे बहुतीर्थयुक्तान् ॥ १ ॥

स क्षेत्रवासो निकटे गुरोर्यो वासस्तदीयाङ्घ्रिजलं च तीर्थम् ।
गुरूपदेशेन यदात्मदृष्टिः सैव प्रशस्ताऽखिलदेवदृष्टिः ॥ २ ॥

शुश्रूषमाणेन गुरोः समीपे स्थेयं न नेयं च ततोऽन्यदेशे ।
विशिष्य मार्गश्रमकर्शितस्य निद्राभिभूत्या किमु चिन्तनीयम् ॥ ३ ॥

द्विधा हि संन्यास उदीरितोऽयं विबुद्धतत्त्वस्य च तद्बुभुत्सोः ।
तत्त्वंपदार्थैक्य उदीरितोऽयं यत्नात्त्वमर्थः परिशोधनीयः ॥ ४ ॥

संभाव्यते क्व च जलं क्व च नास्ति पाथः
शय्यास्थलं क्वचिदिहास्ति न च क्व चास्ति ।
शय्यास्थलीजलनिरीक्षणसक्तचेताः
पान्थो न शर्म लभते कलुषीकृतात्मा ॥ ५ ॥

ज्वरातिसारादि च रोगजालं बाधेत चेत्तर्हि न कोऽप्युपायः ।
स्नातुं च गन्तुं च न पारयेत तदा सहायोऽपि विमुञ्चतीमम् ॥ ६ ॥

स्नानं प्रभाते न च देवतार्चनं क्व चोक्तशौचं क्व वा समाधयः ।
क्व चाशनं कुत्र च मित्रसङ्गतिः पान्थो न शर्म लभते क्षुधातुरः ॥

नास्त्युत्तरं गुरुगिरस्तदपीह वक्ष्ये सत्यं यदाह भगवान् गुरुपार्श्ववासः ।
श्रेयानिति प्रथमसंयमिनामनेकान् देशानवीक्ष्य हृदयं न निराकुलं मे ॥

सर्वत्र न क्वापि जलं समस्ति पश्चात् पुरस्तादथवा विदिक्षु।
मार्गो हि विघेत न सुप्यतस्तः सुखेन पुण्यं क्व नु लभ्यतेऽधुना॥९॥

जन्मान्तरार्जितमघं फलदानहेतो-
र्व्याप्यात्मना जनिमुपैति न नो विवादः।
साधारणादिह च वा परदेशके वा
कर्म ह्यभुक्तमनुवर्तत एव जन्तुम्॥१०॥

इह स्थितं वा परतः स्थितं वा कालो न मुञ्चेत् समयागतश्चेत्।
तद्देशगत्याऽमृत देवदत्त इत्यादिकं मोहकृतं जनानाम्॥११॥

मन्वादयो मुनिवराः खलु धर्मशास्त्रे धर्मादि संकुचितमाहुरतिप्रवृद्धम्।
देशाद्यवेक्ष्य न तु तत्सरणिं गतानां शौचायतिक्रमकृतं भ्रमवेद्यं नः॥

दैवेऽनुकूले विपिनं गतो वा समाप्नुयाद्वाञ्छितमप्रमेयः।
म्रियेत नश्येदपि वा पुरःस्थं तस्मिन् प्रतीपे तत एव सर्वम्॥१३॥

गृहं परित्यज्य विदेशगो ना सुखं समागच्छति तीर्थदृश्वा।
गृहं गतो याति मृतिं पुरस्तात्तदागमादत्र च किं निमित्तम्॥१४॥

देशे कालेऽवस्थितं तद्विमुक्तं ब्रह्मानन्दं पश्यतां तत्र तत्र।
चित्तैकाग्र्ये विद्यमाने समाधिः सर्वत्रासौ दुर्लभो नेति मन्ये॥१५॥

सत्तीर्थसेवा मनसः प्रसादिनी देशस्य वीक्षा मनसः कुतूहलम्।
क्षिणोत्यनर्थान् सुजनेन सङ्गमस्तस्मान्न कस्मै भ्रमणं विरोचते॥१६॥

अटाट्यमानोऽपि विदेशसङ्गतिं लभेत विद्वान् विदुषाऽभिसङ्गतिम्।
बुधो बुधानां खलु मित्रमीरितं खलेन मैत्री न चिराय तिष्ठति॥

समीपवासोऽयमुदीरितो गुरोर्विदेशगो यद् हृदयेन धारयेत्।
समीपगोऽप्येष न संस्थितोऽन्तिके न भक्तिहीनो यदि धारयेद् हृदि॥

सुजनः सुजनेन संगतः परिपुष्णाति मतिं शनैः शनैः ।
परिपुष्टमतिर्विवेकवाञ्शनकैर्हेयगुणं विमुञ्चति ॥ १९ ॥

यद्याग्रहोऽस्ति तव तीर्थनिषेवणायां
विघ्नो मयाऽत्र न खलु क्रियते पुमर्थे ।
चित्तस्थिरत्वगतये विहितो निषेधो
मा भूद्विशेषगमनं त्वतिदुःखहेतुः ॥ २० ॥

नैको मार्गो बहुजनपदक्षेत्रतीर्थानि यातां
चौराध्वानं परिहर सुखं त्वन्यमार्गेण याहि ।
विप्राग्र्याणां वसतिविततिर्यत्र वत्स्यत्समीप-
स्थो येत्सार्थे परिचितजनैः शीघ्रमुद्दिष्टदेशम् ॥ २१ ॥

सद्भिः सङ्गो विधेयः स हि सुखनिचयं सूयते सज्जनाना-
मध्यात्मैक्ये कथास्ता घटितबहुरसाः श्राव्यमाणाः प्रशान्तैः ।
कायक्लेशं विभिन्द्युः सततमयमिदः श्रान्तविश्रामवृक्षाः
स्वान्तश्रोत्राभिरामाः परिमृषिततपः क्षोभितक्षुत्कलङ्काः ॥ २२ ॥

सत्सङ्गोऽयं बहुगुणयुतोऽप्येकदोषेण दुष्टो
यत् स्वान्तेऽयं तपति च परं सूयते दुःखजालम् ।
खल्वासङ्गो वसतिसमये शर्मदः पूर्वकाले
प्रायो लोके सततविमलं नास्ति निर्दोषमेकम् ॥ २३ ॥

मार्गे यास्यन्न बहुदिवसान् पाथसः संग्रही स्या-
त्तस्मादोषो जिगमिषुपदप्राप्तिविघ्नस्ततः स्यात् ।
प्राप्योद्दिष्टं वस निरसनं तत्र कार्यस्य सिद्धे-
र्मूलाद्भ्रंशोऽभिलषितपदप्राप्त्यभावोऽन्यथा हि ॥ २४ ॥

मार्गे चोरा निकृतिवपुषः संवसेयुः सहैव
छन्नात्मानो बहुविधगुणैः संपरीक्ष्याः प्रयत्नात्।
देवान् वस्त्रं लिखितमथवा दुर्विधा नेतुकामा
विश्वासोऽतोऽपरिचितनृपु प्रोज्झनीयो न कार्यः ॥ २५ ॥

मध्येमार्गं योजनाभ्यन्तरे वा तिष्ठेयुश्चेद्भिक्षवस्तेऽभिगम्याः।
पूज्याः पूज्यास्तद्व्यतिक्रान्तिरुग्रा श्रेयस्कार्यं निष्फलीकर्तुमीशाः ॥

यदापदपदं सदा यतिवर स्थितं वस्तु त-
न्मतं भज मितंपचान् मनसि मा कृथाः प्राकृतान्।
कषायकलुषाशयक्षतिविनिर्वृतः सन्मतः
सुखी चर सुखे चिरात् स्फुरति संततानन्दता ॥ २७ ॥

इत्थं गुरोर्मुखगुहोदितवाक्सुधां ता-
मापीय हृष्टहृदयः स मुनिः प्रतस्थे।
प्रस्थाप्य तं गुरुवरोऽथ सुरेश्वराद्यैः
कालं कियन्तमनयत् सह भङ्गकुध्रे ॥ २८ ॥

अधिगम्य तदाऽऽत्मयोगशक्त्येतनुभावेन निवेद्य चाऽऽश्रवेभ्यः।
अवलम्बिततारकापथोऽसावचिरादन्तिकमाससाद मातुः ॥ २९ ॥

तत्राऽऽतुरां मातरमैक्षताऽसौ ननाम तस्याश्चरणौ कृतात्मा।
सा चैनमुद्वीक्ष्य शरीरतापं जहौ निदाघार्त इवाम्बुदेन ॥ ३० ॥

असावसङ्गोऽपि तदाऽऽर्द्रचेतास्तामाह मोहान्धतमोपहर्ता।
अम्बायमस्त्यत्र शुचं जहीहि प्रब्रूहि किं ते करवाणि कृत्यम् ॥ ३१ ॥

दृष्ट्वा चिरात् पुत्रमनामयं सा
हृष्टान्तरात्मा निजगाद मन्दम्।

अस्यां दशायां कुशली मया त्वं
दिष्ट्याऽसि दृष्टः किमतोऽस्ति कृत्यम् ॥ ३२ ॥

इतः परं पुत्रक गात्रमेतद्वोढुं न शक्नोमि जरातिशीर्णम् ।
संस्कृत्य शास्त्रोदितवर्त्मना त्वं सद्वृत्त मां प्रापय पुण्यलोकान् ॥

सुतानुगां सूक्तिमिमां जनन्याः श्रुत्वाऽथ तस्यै सुखरूपमेकम् ।
मायामयाशेषविशेषशून्यं मानातिगं स्वप्रभमप्रमेयम् ॥ ३४ ॥

उपादिशद्ब्रह्म परं सनातनं न यत्र हस्ताङ्घ्रिविभागकल्पना ।
अन्तर्बहिः संनिहितं यथाम्बरं निरामयं जन्मजरादिवर्जितम् ॥ ३५ ॥

सौम्यागुणे मे रमते न चित्तं रम्यं वद त्वं सगुणं तु देवम् ।
न बुद्धिमारोहति तत्त्वमार्त यदेकमस्थूलमनण्वगोत्रम् ॥ ३६ ॥

निशम्य मातुर्वचनं दयालुस्तुष्टाव भक्त्या भुनिरष्टमूर्तिम् ।
तुष्टैर्भुजङ्गोपपदैः प्रसन्नः प्रस्थापयामास स च स्वदूतान् ॥ ३७ ॥

विलोक्य तान्शूलपिनाकहस्तान्नैवानुगच्छेयमिति ब्रुवन्त्याम् ।
तस्यां विसृज्यानुनयेन शैवानस्तौदथो माधवमादरेण ॥ ३८ ॥

भुजगाधिपभोगतल्पभाजं कमलाङ्कस्थलकल्पिताङ्घ्रिपद्मम् ।
अभिवीजितमादरेण नीलावसुधाभ्यां चलमानचामराभ्याम् ॥ ३९ ॥

विहिताञ्जलिना निषेव्यमाणं विनतानन्दकृताऽग्रतो रथेन ।
धृतमूर्तिभिरस्त्रदेवताभिः परितः पञ्चभिरञ्चितोपकण्ठम् ॥ ४० ॥

महनीयतमालकोमलाङ्गं मकुटीरत्नचयं महार्हयन्तम् ।
शिशिरेतरभानुशीलिताग्रं हरिनीलोपलभूधरं हसन्तम् ॥ ४१ ॥

तत्रात्यं निजसुतोदितमम्बुजाक्षं
चित्ते दधार मृतिकाल उपागतेऽपि ।

चित्तेन कञ्जनयनं हृदि भावयन्ती
तत्याज देहमचला किल योगिवत्सा ॥ ४२ ॥

ततः शरच्चन्द्रमरीचिरोचिर्विचित्रपारिप्लवकेतनाढ्यम् ।
विमानमादाय मनोज्ञरूपं प्रादुर्बभूवुः किल विष्णुदूताः ॥ ४३ ॥

वैमानिकांस्तान्नयनाभिरामानवेक्ष्य हृष्टा प्रशशंस पुत्रम् ।
विमानमारोप्य विराजमानमनायि तैः सा बहुमानपूर्वम् ॥ ४४ ॥

इयमर्चिरहर्वलक्षपक्षान् षडुदग्व्याससमानिलार्कचन्द्रान् ।
चपलावरुणेन्द्रधातृलोकान् क्रमशोऽस्तीत्य परं पदं प्रपेदे ॥ ४५ ॥

स्वयमेव चिकीर्षुरेष मातुश्चरमं कर्म समाजुहाव बन्धून् ।
किमिहास्ति यते तवाधिकारः किमवेत्येनममी निनिन्दुरुच्चैः ॥ ४६ ॥

अनलं बहुधाऽर्थिताऽपि तस्मै वत नाऽऽदत्त च बन्धुता तदीया ।
अथ कोपपरीवृतान्तरोऽसावखिलांस्तानशपच्च निर्ममेन्द्रः ॥ ४७ ॥

संचित्य काष्ठानि सुशुष्कवन्ति गृहोपकण्ठे धृततोयपात्रः ।
स दक्षिणे दोष्णि ममन्थ वह्निं ददाह तां तेन च संयतात्मा ॥ ४८ ॥

न याचिता वह्निमदुर्यदस्मै शशाप तान् स्वीयजनान् सरोषः ।
इतः परं वेदबहिष्कृतास्ते द्विजा यतीनां न भवेच्च भिक्षा ॥ ४९ ॥

गृहोपकण्ठेषु च वः श्मशानमद्यप्रभृत्यस्त्विति तान् शशाप ।
अद्यापि तद्देशभवा न वेदमधीयते नो यमिनां च भिक्षा ॥ ५० ॥

तदाप्रभृत्येव गृहोपकण्ठेष्वासीत् श्मशानं किल हन्त तेषाम् ।
महत्सु धीपूर्वकृतापराधो भवेत् पुनः कस्य सुखाय लोके ॥ ५१ ॥

शान्तः पुमानिति न पीडनमस्य कार्यं
शान्तोऽपि पीडनवशात् क्रुधमुद्वहेत् सः ।

शीतः सुखोऽपि मथितः किल, चन्दनद्रु-
स्तीव्राहुताशजनको भवति क्षणेन ॥ ५२ ॥

यद्यप्यशास्त्रीयतया विभाति तेजस्विनां कर्म तथाऽप्यनिन्द्यम् ।
विनिन्द्यकृत्यं किल भार्गवस्य ददुः स्वपुत्रान् कतिचिद्वृकाय ॥ ५३ ॥

इति स्वजननीमसौ मुनिजनैरपि प्रार्थितां
पुनः पतनवर्जितामतनुसौख्यसन्दोहिनीम् ।
यतिक्षितिपतिर्गतिं वितमसं स नीत्वा तत-
स्ततोऽन्यमतशातने प्रयतते स पृथ्वीतले ॥ ५४ ॥

अथ तत्सहायजलजांघ्रिमुपागमेच्छुरमीप्सितेऽत्र विललम्ब एषकः ।
जलजांघ्रिरप्यथ पुरा निजाज्ञया कृतवानुदीच्यबहुतीर्थसेवनम् ॥ ५५ ॥

आससाद सनकर्दिशं मुनेर्यस्य जन्म वसुधाघटी स्मृता ।
सा श्रुतिः सकलरोगनाशिनी योऽपिबज्जलधिमेकबिन्दुवत् ॥ ५६ ॥

अद्राक्षीत्सुभगाहिभूषिततनुं श्रीकालहस्तीश्वरं
लिङ्गे सन्निहितं दधानमनिशं चान्द्रीं कलां मस्तके ।
पार्वत्या करुणारसार्द्रमनसाऽऽश्लिष्टं प्रमोदास्पदं
देवैरिन्द्रपुरोगमैर्जय जयेत्याभाष्यमाणं मुनिः ॥ ५७ ॥

स्नात्वा सुवर्णमुखरीसलिलाशयेऽन्त-
र्गत्वा पुनः प्रणमति स्म शिवं भवान्या ।
ध्यानर्च भावकुसुमैर्मनसा नुनाव,
स्तुत्वा च, तं पुनरयाचत तीर्थयात्राम् ॥ ५८ ॥

लब्ध्वाऽनुज्ञां तज्ञरात् कालहस्तिक्षेत्रात् काञ्चीक्षेत्रमागात्पवित्रम् ।
संसाराब्धिं संतितीर्षोः प्रसिद्धं मुद्राः प्राहुर्यद्धि लोके ह्यमुष्मिन् ॥

तत्रैकाम्राधीश्वरं विश्वनाथं नत्वा गम्यं स्वीयभाग्यातिशीत्या ।
देवीं धामान्तर्गतामन्धकारेर्हार्दं रुद्रस्येव जिज्ञासमानाम् ॥ ६० ॥

कल्लालेशं द्राक्ततो नातिदूरे लक्ष्मीकान्तं संवसन्तं पुराणम् ।
कारुण्यार्द्रस्वान्तमन्तादिशून्यं दृष्ट्वा देवं संतुतोषैकभक्त्या ॥ ६१ ॥

पुण्डरीकपुरमाययौ मुनिर्यत्र नृत्यति सदाशिवोऽनिशम् ।
वीक्षते प्रकृतिरादिमा हृदा पार्वतीपरिणतिः शुचिस्मिता ॥ ६२ ॥

ताण्डवं मुनिजनोऽत्र वीक्षते दिव्यचक्षुरमलाशयोऽनिशम् ।
जन्ममृत्युमपभेदि दर्शनान्नेत्रमानसविनोदकारकम् ॥ ६३ ॥

किं चात्र तीर्थमिति भिक्षुगणेन कश्चित्
पृष्टोऽब्रवीच्छिवपदाम्बुजसक्तचित्तः ।
संप्रार्थितः करुणयाऽस्मरदत्र गङ्गां
देवोऽथ संन्यधित दिव्यसरित् सुतीर्थम् ॥ ६४ ॥

शिवाज्ञयाऽभूदिति तीर्थमेतच्छिवस्य गङ्गां प्रवदन्ति लोके ।
स्नानादमुष्यां त्रिगुणोत्थतापाः शनैः शनैस्ताण्डवमीक्षमाणाः ॥ ६५ ॥

शिवस्य नाट्यश्रमकर्शितस्य श्रमापनोदाय विचिन्तयन्ती ।
शिवेति गङ्गापरिणाममगाऽभूत्ततोऽयमेतत्प्रथितं तदाख्यम् ॥ ६६ ॥

नृत्यचीरदवस्खलज्जलगतेः पर्यापतद्बिन्दुकं
पार्श्वे स्नानपरैर्विनोदवशतो यज्जह्नुकन्यापयः ।
नृत्यं तन्वति धूर्जटौ विगलितं प्रेङ्खज्जटामण्डला-
त्तेनैतच्छिवजाह्नवीति कथयन्त्यन्ये विपश्चिज्जनाः ॥ ६७ ॥

स्नायं स्नायं तीर्थवर्येऽत्र नित्यं वीक्षं-वीक्षं देवपादाब्जयुग्मम् ।
शोधं शोधं मानसं मानवोऽसौ वीक्षेतेदं ताण्डवं शुद्धचेताः ॥ ६८ ॥

शुद्धं महद्वर्णयितुं क्षमेत पुण्यं पुरारिः स्वयमेव तस्य ।
निमज्ज्य शम्भुप्रसरित्यमुष्यां दाक्षायणीनाथमुदीक्षते यः ॥ ६९ ॥

इतीरितः शङ्करयोजितात्मा केनापि भिक्षुर्मुदितो जगाहे ।
तीर्थे तदाप्लुत्य ननाम शम्भोरङ्घ्रिं जितात्मा भुवनस्य गोप्तुः ॥

रामसेतुगमनाय संदधे मानसं मुनिरनुत्तमः पुनः ।
वर्त्मनि प्रयतमानसो व्रजन् संददर्श सरितं कवेरजाम् ॥ ७१ ॥

यत्पवित्रपुलिनस्थलं पयःसिन्धुवासरसिकाय विष्णवे ।
अभ्यरोचत हिरण्यवाससे पद्मनाभमुखनामशालिने ॥ ७२ ॥

सह्यपर्वतसुतातिनिर्मलाम्भोभिषिक्तभगवत्पदाम्बुजे ।
आकलय्य बहुशिष्यसंवृतः प्रास्थिताभिरुचितस्थलाय सः ॥ ७३ ॥

गच्छन् गच्छन् मार्गमध्येऽभियातं गेहं भिक्षुर्मातुलस्याऽऽजगाम ।
दृष्ट्वा शिष्यैस्तं चिरेणाभियातं मोदं प्रापन्मातुलः शास्त्रवेदी ॥ ७४ ॥

शुश्राव तं बन्धुजनः सशिष्यं स्वमातुलागारमुपेयिवांसम् ।
आगत्य दृष्ट्वा चिरमागतं तं जहर्ष हर्षातिशयेन साश्रुः ॥ ७५ ॥

रुरोद कश्चिन्मुमुदेऽत्र कश्चिज्जहास पूर्वाचरितं बभाषे ।
कश्चित्प्रमोदातिशयेन किंचिद्वचः स्खलद्धीः प्रणनाम कश्चित् ॥ ७६ ॥

ऊचेऽस्य तं ज्ञातिजनः प्रमोदी दृष्ट्वा चिरायाक्षिपथं गतोऽभूः ।
दिदृक्षते त्वां जनताऽतिहार्दाच्चयाऽपि शक्नोपि न वीक्षणाय ॥ ७७ ॥

पुत्राः समिता न न बन्धुवर्गो न राजबाधा न च चोरभीतिः ।
कृतार्थतामूलपदं यतित्वं प्रसन्नवन्तं फलितं महान्तम् ॥ ७८ ॥

शाखोपशाखाश्रितमेव वृक्षं बाधन्त आगत्य न तद्विहीनम् ।
यथा तथा वा धनिनं दरिद्रा बाधन्त आगत्य दिने दिने स्म ॥ ७९ ॥

कुटुम्बरक्षागतमानसानामायाति निद्राऽपि सुखं न जातु।
क देवतार्चा क च तीर्थयात्रा क वा निषेवा महतां भवेन्नः ॥ ८० ॥

अश्रौष्म संन्यासकृतं भवन्तं विप्रात् कुतश्चिद्गृहमागतान्नः।
कालोऽत्यगात्ते वहुतरं देवार्चाथैस्य हेतोर्गृहमागतस्त्वम् ॥ ८१ ॥

यथा शकुन्ताः परवर्धितान् द्रुमान् समाश्रयन्ते सुखदांस्त्यजन्त्यपि।
परप्रक्लृप्तान् मठदेवतागृहान्यतिः समाश्रित्य तथोज्झति ध्रुवम् ॥८२॥

यथा हि पुष्पाण्यभिगम्य षट्पदाः संगृह्य सारं रसमेव भुञ्जते।
तथा यतिः सारमवाप्नुवन् सुखं गृहाद्गृहादोदनमेव भिक्षते ॥ ८३ ॥

यतेर्विरज्यात्मगतिः कलत्रं देहं गृहं संयतमेव सौख्यम्।
विरक्तिभाजस्तनयाः स्वशिष्याः किमर्थनीयं यतिनो महात्मन् ॥८४॥

मनोरथानां न समाप्तिरिष्यते पुनः पुनः संतनुते मनोरथान्।
दारानभीप्सुर्यतते दिवानिशं तान् प्राप्य तेभ्यस्तनयानभीप्सति ॥

अनाप्नुवन् दुःखमसौ सुतीव्रं प्राप्नोति चेष्टेन वियुज्यते पुनः।
सर्वात्मना कामवशस्य दुःखं तस्माद्विरक्तिः पुरुषेण कार्या ॥ ८६ ॥

विरक्तिमूलं मनसो विशुद्धिं तन्मूलमाहुर्महतां निषेवाम्।
भवादृशास्तेन च दूरदेशे परोपकाराय रसामटन्ति ॥ ८७ ॥

अज्ञातगोत्रा विदितात्मतत्त्वा लोकस्य दृष्ट्या जडवद्विभान्तः।
चरन्ति भूतान्यनुकम्पमानाः सन्तो यदृच्छोपनतोपभोग्याः ॥ ८८ ॥

चरन्ति तीर्थान्यपि संग्रहीतुं लोकं महान्तो ननु शुद्धभावाः।
शुद्धात्मविद्याक्षपितोरुपापास्तज्जुष्टमम्भो निगदन्ति तीर्थम् ॥ ८९ ॥

वसन्त्वमत्र कतिचिद्दिवसानि विद्वंस्त्वद्दर्शनं वितनुते मुदितादि मध्यम्।
एष्यद्वियोगचकिता जनतेयमास्ते दुःखं गतेऽत्र भवितेति भवत्यसङ्गे ॥

कोशं क्लेशमलस्य लास्यगृहमप्युद्दंहसामालयं
पैशुन्यस्य निशान्तमुत्कटमृषाभाषाविशेषाश्रयम् ।
हिंसामांसलमाश्रिता घनघनाशंसानृशंसा वयं
वर्ज्यं दुर्जनसङ्गमं करुणया शोध्या यतीन्दो त्वया ॥ ९१॥

संयुनक्ति वियुनक्ति देहिनं दैवमेव परमं मनागपि ।
इष्टसङ्गतिनिवृत्तिकालयोर्निर्विकारहृदयो भवेश्वरः ॥ ९२ ॥

मध्याह्नकाले क्षुधितस्तृषार्तः क मेऽन्नदातेति वदन्नुपैति ।
यस्तस्य निर्वापयिता क्षुधार्तेः कस्तस्य पुण्यं वदितुं क्षमेत ॥ ९३ ॥

सायं प्रातर्वह्निकार्यं वितन्वन् मज्जंस्तोये दण्डकृष्णाजिनी च ।
नित्यं वर्णी वेदवाक्यान्यधीयन् क्षुद्बुध्या शीघ्रं गेहिनो गेहमेति ॥

उच्चैः शास्त्रं भाषमाणोऽपि भिक्षुस्तारं मन्त्रं संजपन्वा यतात्मा ।
मध्येघस्रं जाठराग्नौ प्रदीप्ते दण्डी नित्यं गेहिनो गेहमेति ॥ ९५ ॥

यदन्नदानेन निजं शरीरं पुष्णंस्तपोऽयं कुरुते सुतीव्रम् ।
फलार्धमस्मै ददतोऽन्नमर्धमिति स्मृतिः संवदतेऽनवद्या ॥ ९६ ॥

पुण्यं गृहस्थेन विचक्षणेन गृहेषु संचेतुमलं प्रयासात् ।
विनाऽपि तत्फलनिषेवणेन तीर्थादिसेवा बहुदुःखसाध्या ॥ ९७ ॥

गृही धनी धन्यतरो मतो मे तस्योपजीवन्ति धनं हि सर्वे ।
चौर्येण कश्चित्प्रणयेन कश्चिद्दानेन कश्चिद्बलतोऽपि कश्चित् ॥ ९८ ॥

संतोषयेद्वेदविदं द्विजं यः सन्तोषयत्येष स सर्वदेवान् ।
तद्वेदविप्रे निवसन्ति देवा इति स्म साक्षाच्छ्रुतिरेव वक्ति ॥ ९९ ॥

स्वधर्मनिष्ठा विदिताखिलार्था जितेन्द्रियाः सेवितसर्वतीर्थाः ।
परोपकारव्रतिनो महान्त आयान्ति सर्वे गृहिणो गृहाय ॥ १०० ॥

गृही गृहस्थोऽपि तदश्नुते फलं यत्तीर्थसेवाभिरवाप्यते जनैः ।
तत्तस्य तीर्थं गृहमेव कीर्तितं धनी वदान्यः प्रवसेन्न कश्चन ॥ १०१ ॥

अन्तःस्थिता मूषकमुख्यजीवा बहिः स्थिता गोमृगपक्षिमुख्याः ।
जीवन्ति जीवाः सकलोपजीव्यस्तस्माद्गृही सर्ववरो मतो मे ॥ १०२ ॥

शरीरमूलं पुरुषार्थसाधनं तच्चान्नमूलं श्रुतितोऽवगम्यते ।
तच्चान्नमस्माकमधीषु संस्थितं सर्वं फलं गेहपतिद्रुमाश्रयम् ॥ १०३ ॥

ब्रवीमि भूयः शृणुताऽऽदरेण वो गृहागतं पूजयताऽऽतुरातिथिम् ।
संपूजितो योऽतिथिरुद्धरत्कुलं निराकृतात् किं भवतीति नोच्यते ॥

विनाऽभिसन्धिं कुरुत श्रुतीरितं कर्म द्विजा नो जगतामधीश्वरः ।
तुष्येदिति प्रार्थनयाऽपि तेन स्वान्तस्य शुद्धिर्भविताऽचिरेण वः ॥

ससंरम्भश्लिष्यत्सुफणिगणवधूटीकुचतटी-
पटीरस्पर्शारागस्तनपङ्काङ्कितहृदः ।
तथाऽप्येते पूता यतिपतिपदाम्भोजभजन-
क्षणक्षीणक्लेशाः सदयहृदयामाः सुकृतिनः ॥ १०६ ॥

संदिश्येत्थं बन्धुतां भिक्षुराजो भिक्षां चक्रे मातुलस्यैव गेहे ।
पप्रच्छैनं मातुलो भुक्तवन्तं किंस्विच्छन्नं पुस्तकं शिष्यहस्ते ॥ १०७ ॥

टीका विद्वन् भाष्यगेति ब्रुवाणं तां दर्शीति प्रार्थिते दत्तवांश्च ।
अद्राक्षीत्तां मातुलस्तस्य बुद्धिं दृष्ट्वाऽऽनन्दात् खेदमापच्च किंचित् ॥

प्रबन्धनिर्माणविचित्रनैपुणीं दृष्ट्वा प्रमोदं स बिभेद किंचित् ।
मतान्तराणां किल युक्तिजालैर्निरुत्तरं बन्धनमाशुशङ्के ॥ १०९ ॥

गुरोर्मतं स्वाभिमतं विशेषान्निराकृतं तत्र समस्तमप्यभूत् ।
साधुर्निबन्धोऽयमिति ब्रुवाणः सामर्षयोगोऽपि कृताभिनन्दः ॥ ११०

सेतुं गच्छाम्यालये पुस्तभारं ते न्यस्येमं वर्तते मेऽत्र जीवः ।
विद्वन् यद्वद्गोगृहादौ परेषां प्रीतिः पूर्णा नस्तथा पुस्तभारे ॥ १११ ॥

इत्युक्त्वा वैमातुलं मस्करीशः शिष्यैर्हृष्यन् सेतुमेष प्रतस्थे ।
प्रस्थातुः श्रीपद्मपादस्य जातं कष्टं चेष्यत्सूचनार्थं निमित्तम् ॥ ११२ ॥

वामं नेत्रं गन्तुरस्पन्दतैव बाहुः पुस्फोरापि वामस्तथोरुः ।
चुक्षावोच्चैर्हन्त कश्चित्पुरस्ताच्चत्तत्वं द्रागशोऽगणित्वा जगाम ॥ ११३ ॥

गतेऽत्र मेने किल मातुलोऽस्य ग्रन्थे स्थितेऽस्मिन् गुरुपक्षहानिः ।
दग्धेऽत्र जायेत महान् प्रचारो नोक्त्या निराकर्तुमपि प्रसक्तम् ॥११४॥

पक्षस्य नाशाद्गृहनाश एव नो वरं गृहेणैव दहामि पुस्तकम् ।
एवं निरूप्य न्यदधाद्धुताशनं चुक्रोश चाग्निर्दहतीति मे गृहम् ॥

ऐजिह्ममाश्रित्य वदन्ति चैवं वदेव मूढं मम भाषणेऽपि ।
यावत्कृतं तावदिहास्य कर्तुः पापं ततः स्याद्द्विगुणं प्रवक्तुः ॥ ११६ ॥

गच्छन्नसौ फुल्लमुनेर्जगाम तमाश्रमं यत्र च रामचन्द्रः ।
अश्वत्थमूले न्यावत स्वचापं स्वयं कुशानामुपरि न्यषीदत् ॥ ११७ ॥

तीर्त्वा समुद्रं जनकात्मजायाः सन्दर्शनोपायमवीक्षमाणः ।
वसुन्धरायाः श्रवणाः प्लवङ्गा न वारिराशौ प्लवनं क्षमन्ते ॥ ११८ ॥

संचिन्तयन्निति कुशासनसंनिविष्टो ज्योतिस्तदैक्षत विदूरगमेव किञ्चित् ।
संव्याप्नुवज्जगदिदं सुखशीतलं यत्संप्रार्थनीयमनिशं मुनिदेवताभिः ॥

आगच्छदात्माभिमुखं निरीक्ष्य सर्वे तदुत्तस्थुरुदारवीर्याः ।
ततः पुमाकारमदृश्यतैतन्महाप्रभामण्डलमध्यवर्ति ॥ १२० ॥

मध्येप्रभामण्डलमैक्षताश्रितं स्त्रियाकृति सर्वतपोमयं पुनः ।
लोपादिमुद्रासहितं महामुनिं प्राबोधि कुम्भोद्भवमादराज्जनैः ॥ १२१ ॥

अगस्त्यदृष्ट्या रघुनन्दनस्ततः स खेदमन्तःकरणोत्थमत्यजत् ।
प्रायो महद्दर्शनमेव देहिनां क्षिणोति खेदं रविवन्महातमः ॥ १२२ ॥

सभार्यमर्घ्यादिभिरर्चयित्वा रामस्तदङ्घ्री शिरसा ननाम ।
तूष्णीं मुहूर्तं व्यसनार्णवस्थो धृतिं समास्थाय पुनर्बभाषे ॥ १२३ ॥

दृष्ट्वा भवन्तं पितृवत्प्रमोदे यन्मामगा दुःखमहार्णवस्थम् ।
मन्ये ममाऽऽत्मानमवाप्तकामं वंशो महान्मे तपनात्प्रवृत्तः ॥ १२४ ॥

न तत्र मादृग्जनिता न जातः पदच्युतोऽहं प्रथमं समार्यः ।
सलक्ष्मणोऽरण्यमुपागतश्च मारीचमायानिहतान्तरङ्गः ॥ १२५ ॥

तत्रापि भार्यामहृत च्छलेन स रावणो राक्षसपुङ्गवो मे ।
सा चाधुनाऽशोकवने समास्ते कृशा वियोगात्स्वत एव तन्वी ।१२६॥

तीर्त्वा समुद्रं विनिहत्य दुष्टं बलेन सीतां महता हरामि ।
यथा तथोपायमुदाहर त्वं न मे त्वदन्योऽस्ति हितोपदेष्टा ॥ १२७ ॥

इतीरितो वाचमुवाच विद्वान्मा राम शोकस्य वशं गतो भूः ।
वंशद्वये सन्ति नृपा महान्तः संप्राप्य दुःखं परिमुक्तदुःखाः ॥ १२८ ॥

त्वमग्रणीर्दाशरथे धनुर्भृतां तवानुजस्यापि समो न लभ्यते ।
प्लवङ्गमानामधिपस्य कोटिशो मा मुञ्च मा मुंच वचो विनार्थम् ॥

सहायसंपत्तिरियं तवास्ति हितोपदेष्टाऽप्यहमस्मि कश्चित् ।
वारांनिधिः किं कुरुते तवायं स्मराधुना गोष्पदमात्रमेनम् ॥ १३० ॥

पुरैव चार्वब्धिमहं पिबामि शुष्केऽत्र तेन प्रतियाहि लङ्काम् ।
एवं मया कीर्तिरुपार्जिता स्याद्वद्धे तु वार्धौ तव सार्जिता स्यात् ॥

सेतुं वार्धौ बन्धयित्वा जहि त्वं दुष्टं चौर्येणैव सीता हृताऽऽसीत् ।
प्राप्नोषि त्वं कीर्तिमाचन्द्रतारं तेनातार्ब्धि धन्यधन्य त्वं कपीन्द्रैः ॥

इत्थं यत्र प्रेरितोऽगस्त्यवाचा सेतुं रामो बन्धयामास वार्धौ ।
तुङ्गैः शृङ्गैर्वानरैस्तेन गत्वा तं हत्वाऽऽजौ जानकीमानिनाय ॥ १३३ ॥

तत्ताद्दक्षे तत्र तीर्थे स भिक्षुः स्नात्वा भक्त्या रामनाथं प्रणम्य ।
तत्र श्रद्धोत्पत्तये मानुषाणां शिष्येभ्यस्तद्वैभवं सम्यगूचे ॥ १३४ ॥

तन्माहात्म्यं वर्णयन्तं मुनिं तं पप्रच्छैनं कश्चिदेवं विपश्चित् ।
रामेशाख्या किंसमासोपपन्ना पृष्टस्त्रेधाऽवोचदेवं समासम् ॥ १३५ ॥

रघूद्वहस्तत्पुरुषं परं जगौ शिवो बहुव्रीहिसमासमैरयत् ।
रामेश्वरे नामनि कर्मधारयं परं समाहुः स्म सुरेश्वरादयः ॥ १३६ ॥

एवं निश्चित्योदितं तत्समासं श्रुत्वा तत्रत्यो बुधो योऽभ्यनन्दत् ।
अम्भोजाङ्घ्रिस्तैरथ स्तूयमानः कश्चित्कालं तत्र योगीडनैषीत् ॥ १३७ ॥

तस्मादार्यः प्रस्थितोऽभूत सशिष्यस्तीर्थस्नानोपात्तचित्तामलत्वः ।
पश्यन् देशान्मातुलीयं जगाहे गेहं दाहं तस्य पुस्तेन सार्धम् ॥

श्रुत्वा किञ्चिद् खेदमापेदिवान् स मत्त्वा मत्वा धैर्यमापेदिवान् सः ।
श्रावं श्रावं मातुलीयस्य तीव्रं दाहं गेहस्यानुकम्पां व्यधत्त ॥ १३९ ॥

विश्वस्य मां निहितवानसि पुस्तभारं
तं चाददद्धुतवहः पतितः प्रमादात् ।
तावान्न मे सदनदाहकृतोऽनुतापो
यावांस्तु पुस्तकविनाशकृतो मम स्यात् ॥ १४० ॥

इत्थं ब्रुवन्तं तमयो न्यगादीत् पुस्तं गतं बुद्धिरवस्थिता मे ।
उक्त्वा समारब्ध पुनश्च टीकां कर्तुं स धीरो यतिवृन्दवन्द्यः ॥ १४१ ॥

दृष्ट्वा बुद्धिं मातुलस्तस्य भूयो भीतः प्रास्यद्भोजने तन्मनोघ्नम् ।
कश्चिद्द्रव्यं पूर्ववन्नाक्षमिष्ट टीकां कर्तुं केचिदेवं ब्रुवन्ति ॥ १४२ ॥

अत्रान्तरेऽन्यैर्निजवच्चरद्भिः स्वैस्तीर्थयात्रां दयितैः सतीर्थ्यैः ।
अर्धादुपेत्याऽऽश्रमतः कनिष्ठज्ञातिः सखेदैः स मुनिः समैक्षि ॥ १४३ ॥

दृष्ट्वा पद्माङ्घ्रिं क्रमात्ते प्रणेमुस्तत्पादाम्भोजीयरेणून् दधानाः ।
अन्योन्यं प्रागादुदुस्ते ददुश्चानेकानेहोयोगजैक्यान्नमांसि ॥ १४४ ॥

वाणीनिर्जितपन्नगेश्वरगुरुप्राचेतसा चेतसा
　बिभ्राणा चरणं मुनेर्विरचितन्यापल्लवं पल्लवम् ।
धुन्वन्तं प्रभया निवारिततमोगङ्गापदं कामदं
　रेजेन्तेवसतां समष्टिरसुहृत्त्याहितात्याहिता ॥ १४५ ॥

शुश्राव साऽन्तेवसतां समष्टिः स्वदेशकीयां सुखदां सुवार्ताम् ।
अर्थात् समीपागततः कुतश्चिद् द्विजेन्द्रतः सेवितसर्वतीर्थात् ॥ १४६ ॥

अथ गुरुवरमनवेक्ष्य नितान्तं व्यथितहृदो मुनिवर्यविनेयाः ।
कथमपि विदिततदीयसुवार्ताः समधिगताः किल केरलदेशान् ॥

अत्रान्तरे यतिपतिः प्रसुवोऽन्त्यकृत्यां
　कृत्वा स्वधर्मपरिपालनसक्तचित्तः ।
आकाशलङ्घिवरकेरमहीरुहेषु
　श्रीकेरलेषु मुनिरास्त चरन् विरक्तः ॥ १४८ ॥

विचरत्नथ केरलेषु विष्वङ्निजशिष्यागमनं निरीक्ष्य मौनी ।
विनयेन महासुरालयेशं विनमन्नस्तुत निस्तुलानुभावः ॥ १४९ ॥

सदसत्त्वविमुक्तया प्रकृत्या चिदचिद्रूपमिदं जगद्विचित्रम् ।
कुरुषे जगदीश लीलया त्वं परिपूर्णोऽसि न हि प्रयोजनेच्छा ॥ १५० ॥

रजसा सृजसीश सत्त्ववृत्तिस्त्रिजगद्रक्षसि तामसः क्षिणोषि ।
बहुधा परिकीर्त्यसे च स त्वं विधिवैकुण्ठशिवाभिधाभिरेकः ॥ १५१ ॥

विविधेषु जलाशयेषु सोऽयं सवितेव प्रतिबिम्बितस्वभावः ।
बहुरूपमिदं प्रविश्य विश्वं स्वयमेकोऽपि भवान् विभात्यनेकः ॥१५२॥

इति देवमभिष्टुवन् विशिष्टस्तुतिलोऽसौ सुरसद्मसंनिविष्टः ।
चिरकालवियोगदीनचित्तः शिरसा शिष्यगणैरयो ववन्दे ॥ १५३ ॥

गुरुणा कुशलानुयोगपूर्वं सदयं शिष्यगणेषु सान्त्वितेषु ।
अतिदीनमनाः शनैरवादीदजहद्गद्गदिकं स पद्मपादः ॥ १५४ ॥

भगवन्नभिगम्य रङ्गनाथं पथि पद्माक्षमहं निवर्तमानः ।
बहुधाविहितानुनीतिर्नीतो बत पूर्वाश्रममातुलेन गेहम् ॥ १५५ ॥

अहमस्य पुरो भिदावदेन्दोरपि पूर्वाश्रमवासनानुबन्धात् ।
अपठं भवदीयभाष्यटीकामजयं चात्र कृतानुयोगमेनम् ॥ १५६ ॥

दग्धमुद्रमुखमुद्रणमन्त्रैर्ध्वस्ततर्कगुरुकापिलतन्त्रैः ।
वर्मितो निगमसारसुधार्कैर्मातुलं तमजयं तव सूक्तैः ॥ १५७ ॥

खड्गाखड्गिविहारकल्पितरुजं काणादसेनामुखे
शस्त्राशस्त्रिकृतं श्रमं च विषमं पश्यत्पदानां पदे ।
यष्टीयष्टिभवं च कापिलबले खेदं मुने तावकैः
सूक्तैर्मौक्तिकवंशमौक्तिकमयैर्नाप्यते वर्मितः ॥ १५८ ॥

अथ गूढहृदो यथापुरं मामस्मिन्न्याऽऽहितसत्क्रियस्य तस्य ।
अधिसद्म निधाय भाष्यटीकामहमस्याऽऽयमशङ्कितो निशायाम् ॥

घुमघुमघुमघुमस्फुरत्परुषप्रभवत्तरुलज्वलज्ज्वालकरालकीलजालः ।
दहनोऽधिनिशीथमस्य धाम्ना बत टीकामपि भस्मसादकार्षीत् ॥ १६० ॥

अदहत्स्वगृहं स्वयं हताशो विमलग्रन्थमसौ विदग्धुकामः ।
मतिमान्द्यकरं गरं च मह्ये न्यधितास्येति विजृम्भते स्म वार्ता ॥

अधुना धिषणा यथापुरं नो विधिना नाविशयं प्रसादमेति ।
विषमा पुनरीदृशी दशा नः किमु युक्ता भवदङ्घ्रिकिङ्कराणाम् ॥

गुरुवर तव या भाष्यवरेण्ये व्यरचि मया ललिता किल वृत्तिः ।
निरतिशयोज्ज्वलयुक्तियुता सा पथि किल हा विननाश कृशानौ ॥

प्रयतेऽहं पुनरेव यदा तां प्रविधातुं बहुधाकृतयत्नः ।
न यथापूर्वमुपक्रमते ताः पटुयुक्तीर्भगवन्मम बुद्धिः ॥ १६४ ॥

कृपापारावारं तव चरणकोणाश्रयरतं
गता दीना दूनाः कति कति न सर्वेश्वरपदम् ।
गुरो मन्तुर्मन्तुः क इव मम पापांश इति चेत्
मृषा मा भाषिष्ठाः पदकमलचिन्ताविविरसौ ॥ १६५ ॥

इति वादिनमेनमार्यपादः करुणापूरकरम्भितान्तरङ्गः ।
अमृतानिधिसम्भवपाल्मोहर्वचनैः सान्त्वयति स वल्गुवल्गैः ॥ १६६ ॥

विषमो भव कर्मणां विपाको विषमोहोपमदुर्निवार एषः ।
विदितः प्रथमं मयाऽयमर्थः कथितश्चाङ्ग सुरेशदेशिकाय ॥ १६७ ॥

पूर्वं शृङ्गक्ष्माधरे मत्समीपे प्रेम्णा याऽसौ वाचिता पञ्चपादी ।
सा मे चित्तान्नापयात्यद्य शोको मातार्च्छीत्रं तां लिखेत्याख्यदार्यः ॥

आश्वास्यैवं जलजचरणं भाष्यकृत्पञ्चपादीम्
आचख्यौ तां कृतिमुपहितां पूर्वमेवाऽऽनुपूर्व्या ।
नैतच्चित्रं परमपुरुषेऽप्याहृतज्ञानशक्तौ
तस्मिन् मूले त्रिभुवनगुरौ सर्वविद्याप्रवृत्तेः ॥ १६९ ॥

प्रसभं स विलिख्य पञ्चपादीं परमानन्दभरेण पद्मपादः ।
उदतिष्ठदतिष्ठदप्यरोदीत् पुनरुद्गायति तु स नृत्यति स्म ॥ १७० ॥

कविताकुशलोऽथ केरलक्ष्माकमनः कश्चन राजशेखराख्यः ।
मुनिवर्यमहं मुदं वितेन निजकोटीरनिघृष्टपन्नखाग्र्यः ॥ १७१ ॥

प्रथते किमु नाटकत्रयी सेत्यमुना संयमिना वचो नियुक्तः ।
अयमुत्तरमाददे प्रमादादनले साऽऽहुतितामुपागतेति ॥ १७२ ॥

मुखतः पठितां मुनीन्दुना तां विलिखन्नेव विसिष्मियेऽथ भूपः ।
वद किं करवाणि किङ्करोऽहं वरदेति प्रणमन् व्यजिज्ञपच्च ॥ १७३ ॥

नृप कालटिनामकाग्रहारा द्विजकर्मानधिकारिणोऽद्य शप्ताः ।
भवताऽपि तथैव ते विधेया बत पापा इति देशिकोऽशपत्तम् ॥१७४॥

पद्माङ्घ्रौ प्रतिपद्य नष्टविस्मृतिं तुष्टे पुनः केरल-
क्ष्मापालो यतिसार्वभौमसविधं प्राप्य प्रणम्याञ्जसा ।
लब्ध्वा तस्य मुखात् स्वनाटकवराण्यानन्दपाथोनिधौ
मज्जंस्तत्पदपद्मयुग्ममनिशं ध्यायन् प्रतस्थे पुरीम् ॥ १७५ ॥

इति श्रीमाधवीये तत्तीर्थयात्राटनार्थकः ।
संक्षेपशङ्करजये सर्गोऽजनि चतुर्दशः ॥

( आदितः श्लोकाः—१५६२ )

## ॥ पञ्चदशः सर्गः ॥

### (आचार्यकृतदिग्विजयवर्णनम्)

अथ शिष्यवरैर्युतः सहस्रैरनुयातः स सुधन्वना च राज्ञा ।
ककुभो विजिगीषुरेष सर्वाः प्रथमं सेतुमुदारधीः प्रतस्थे ॥ १ ॥

अभवत् किल तत्र तत्र शाक्तैर्गिरिजार्चाकपटान्मधुप्रसक्तैः ।
निकटस्थवितीर्णभूरिमोदस्फुटरिङ्खत्पदयुक्तिमान् विवादः ॥ २ ॥

स हि युक्तिभरैर्विधाय शाक्तान् प्रतिवाग्व्याहरणेऽपि तानशक्तान् ।
द्विजजातिबहिष्कृताननार्यानकरोल्लोकहिताय कर्मसेतुम् ॥ ३ ॥

अभिपूज्य स तत्र रामनाथं सह पाण्ड्यैः स्ववशे विधाय चोलान् ।
द्रविडांश्च ततो जगाम काञ्चीं नगरीं हस्तिगिरेर्नितम्बकाञ्चीम् ॥ ४ ॥

सुरधाम स तत्र कारयित्वा परविद्याचरणानुसारि चित्रम् ।
अपवार्य च तान्त्रिकानतानीद्भगवत्याः श्रुतिसम्मतां सपर्याम् ॥ ५ ॥

निजपादसरोजसेवनायै विनयेन स्वयमागतानथाऽन्ध्रान् ।
अनुगृह्य स वेङ्कटाचलेशं प्रणिपत्याऽऽप विदर्भराजधानीम् ॥ ६ ॥

अभिगम्य स भक्तिपूर्वमस्मै कृतपूजः क्रथकैशिकेश्वरेण ।
निजशिष्यनिरस्तदुष्टबुद्धीन् व्यदधाद्भैरवतन्त्रसावलम्बान् ॥ ७ ॥

अभिवाद्य विदर्भराडवादीदथ कर्णाटवसुन्धरामियासुम् ।
भगवन्बहुभिः कपालिजालैः स हि देशो भवतामगम्यरूपः ॥ ८ ॥

न हि ते भगवद्यशः सहन्ते निहितेर्ष्याः श्रुतिषु प्रवीम्यतोऽहम् ।
अहिते जगतां सशुत्सहन्ते महितेषु प्रतिपक्षतां वहन्ते ॥ ९ ॥

इति वादिनि भूमिपे सुधन्वा यतिराजं निजगावधिज्यधन्वा ।
मयि तिष्ठति किं भयं परेभ्यस्तव भक्ते यतिनाथ पामरेभ्यः ॥ १० ॥

अथ तीर्थकराग्रणीः प्रतस्थे किल कापालिकजालकं विजेतुम् ।
निशमय्य तमागतं समागात्क्रकचो नाम कपालिदेशिकाग्र्यः ॥ ११ ॥

पितृकाननभस्मनाऽनुलिप्तः करसंप्राप्तकरोटिरात्तशूलः ।
सहितो बहुभिः स्वतुल्यवेषैः स इति स्माऽऽह महामनाः सगर्वः ॥१२॥

भसितं धृतमित्यदस्तु युक्तं शुचि संत्यज्य शिरःकपालमेतत् ।
वहथाशुचि खर्परं किमर्थं न कथङ्कारमुपास्यते कपाली ॥ १३ ॥

नरशीर्षकुशेशयैरलब्ध्वा रुधिराक्तैर्मधुना च भैरवार्चाम् ।
उमया समया सरोरुहाक्ष्या कथमाश्लिष्टवपुर्मुदं प्रयायात् ॥ १४ ॥

इति जल्पति भैरवागमानां हृदयं कापुरुषेति तं विनिन्द्य ।
निरवासयदारमर्त्यसमाजात् पुरुषैः स्वैरधिकारिभिः सुधन्वा ॥ १५ ॥

भ्रुकुटीकुटिलाननश्चलोष्ठः सितमुद्यम्य परश्वधं स मूर्खः ।
भवतां न शिरांसि चेद्विभिन्द्यां क्रकचो नाहमिति ब्रुवन्नयासीत् ॥१६॥

रुपितानि कपालिनां कुलानि प्रलयाम्भोधरभीकरारवाणि ।
अमुना प्रहितान्यतिप्रसंख्यान्यभियातानि समुद्यतायुधानि ॥ १७ ॥

अथ विप्रकुलं भयाकुलं तद्द्रुतमालोक्य महारथः सुधन्वा ।
कुपितः कवची रथी निषङ्गी धनुरादाय ययौ शरान् विमुञ्चन् ॥ १८ ॥

अवनीभृति योधयत्यरींस्तांस्त्वरयैकत्र ततोऽन्यतो नियुक्ताः ।
क्रकचेन वधाय भूसुराणां द्रुतमासेदुरुदायुधाः सहस्रम् ॥ १९ ॥

अवलोक्य कपालिसङ्घमाराच्छमनानीकनिकाशमापतन्तम् ।
व्यथिताः प्रतिपेदिरे शरण्यं शरणं शङ्करयोगिनं द्विजेन्द्राः ॥ २० ॥

असितोमरपट्टिशत्रिशूलैः प्रजिघांसून् भृशमुज्झिताट्टहासान् ।
यतिराट् स चकार भस्मसाचाग्निजहुङ्कारसुनाऽग्निना क्षणेन ॥ २१ ॥

नृपतिश्च शरैः सुवर्णपुङ्खैर्विनिकृत्तैः प्रतिपक्षवक्त्रपद्मैः ।
रणरङ्गभुवं सहस्रसङ्ख्यैः समलंकृत्य मुदाऽगमन्मुनीन्द्रम् ॥ २२ ॥

तदनु क्रकचो हतान् स्वकीयानरुजांश्च द्विजपुङ्गवानुदीक्ष्य ।
अतिमात्रविदूयमानचेता यतिराजस्य समीपमाप भूयः ॥ २३ ॥

कुमताश्रय पश्य मे प्रभावं फलमाप्स्यस्यधुनैव कर्मणोऽस्य ।
इति हस्ततले दधत्कपालं क्षणमध्यायदसौ निमील्य नेत्रे ॥ २४ ॥

सुरया परिपूरितं कपालं झटिति ध्यायति भैरवागमज्ञे ।
स निपीय तदर्धमर्धमस्मा निदधार स्मरति स्म भैरवं च ॥ २५ ॥

अथ मर्त्यशिरःकपालमाली ज्वलनज्वालजटाछटात्रिशूली ।
विकटप्रकटाट्टहासशाली पुरतः प्रादुरभून्महाकपाली ॥ २६ ॥

तव भक्तजनद्रुहं दृशा सञ्जहि देवेति कपालिना नियुक्तः ।
कथमात्मनि मेऽपराध्यसीति क्रकचस्यैव शिरो जहार रुष्टः ॥ २७ ॥

यमिनामृषभेण संस्तुतः सन्नयमन्तर्धिमवाप देववर्यः ।
अखिलेऽपि खिले कुले खलानामनुमानर्तुलं द्विजाः प्रहृष्टाः ॥ २८ ॥

यतिराडथ तेषु तेषु देशेष्विति पाषण्डयगन् द्विजान् विमथ्नन् ।
अपरान्तमहार्णवोपकण्ठं प्रतिपेदे प्रतिवादिदर्पहन्ता ॥ २९ ॥

विललास चलत्तरङ्गहस्तैर्नदराजोऽभिनयन्निगूढमर्थम् ।
अवधीरितदुन्दुभिस्वनेन प्रतिवादीव महान् महारवेण ॥ ३० ॥

बहुलभ्रमवानयं जडात्मा सुमनोभिर्मथितश्च पूर्वमेव ।
इति सिन्धुमुपेत्य स क्षमावानिव गोकर्णमुदारधीः प्रतस्थे ॥ ३१ ॥

अवगाह्य सरित्पतिं स तत्र प्रियमासाद्य तुषारशैलपुत्र्याः ।
स्तवसत्तममद्भुतार्थचित्रं रचयामास भुजङ्गवृत्तरम्यम् ॥ ३२ ॥

तदनन्तरमागमान्तविद्यां प्रणतेभ्यः प्रतिपादयन्तमेनम् ।
हरदत्तसमाह्वयोऽधिगम्य स्वगुरुं सङ्गिरते स्म नीलकण्ठम् ॥ ३३ ॥

भगवन्निह शङ्कराभिधानो यतिरागत्य जिगीषुरार्यपादान् ।
स्ववशीकृतभट्टमण्डनादिः सह शिष्यैर्गिरिशालये समास्ते ॥ ३४ ॥

इति तद्वचनं निशम्य सम्यग्ग्रथितानेकनिबन्धरत्नहारः ।
शिवतत्परसूत्रभाष्यकर्ता प्रहसन् वाचमुवाच शैववर्यः ॥ ३५ ॥

सरितां पतिमेष शोषयेद्वा सवितारं वियतः प्रपातयेद्वा ।
पटवत्सुरवर्त्म वेष्टयेद्वा विजये नैव तथाऽपि मे समर्थः ॥ ३६ ॥

परपक्षतमिस्रचण्डदर्कैर्मम तर्कैर्बहुधा विशीर्यमाणम् ।
अधुनैव मतं निजं स पश्यत्विति जल्पन्निरगादनल्पकोपः ॥ ३७ ॥

सितभूतितरङ्गिताखिलाङ्गैः स्फुटरुद्राक्षकलापकम्रकण्ठैः ।
परिवीतमधीतशैवशास्त्रैर्मुनिरायान्तममुं ददर्श शिष्यैः ॥ ३८ ॥

अधिगत्य महर्षिसन्निकर्षं कविरातिष्ठिपदात्मपक्षमेषः ।
शुकजातकजातमशास्त्रतः प्राक्कपिलाचार्य इवाऽऽत्मशास्त्रमद्धा ॥ ३९ ॥

भगवन् क्षणमात्रमीक्ष्यतां तत्प्रथमं तु स्फुरदुक्तिपाटवं मे ।
इति देशिकपुङ्गवं निवार्य व्यवदच्चेन सुरेश्वरः सुधीशः ॥ ४० ॥

सुमते तव कौशलं विज्ञाने स्वयमेवैष मुनिः प्रतिब्रवीतु ।
इति तं विनिवर्त्य नीलकण्ठो यतिकण्ठीरवसंमुखस्तदाऽऽसीत् ॥ ४१ ॥

परपक्षविसावलीमरालैर्वचनैस्तस्य मतं चखण्ड दण्डी ।
अथ नीलगलः स्वपक्षरक्षां जहदद्वैतमपाकरिष्णुरूचे ॥ ४२ ॥

प्रशमिस्तदसीति यत्त्रयीकैः कथितोऽर्थः स न युज्यते त्वदिष्टः ।
अभिदा तिमिरप्रकाशयोः किं घटते हन्त विरुद्धधर्मवत्त्वात् ॥ ४३ ॥

रवितत्प्रतिबिम्बयोरिवाभिदटतामित्यपि तत्त्वतो न वाच्यम् ।
मुकुरे प्रतिबिम्बितस्य मिथ्यात्वगतेर्व्योमशिवादिदेशिकोक्त्या ॥

मुकुरस्थमुखस्य बिम्बवक्त्राङ्किदया पार्श्वगलोकलोकनेन ।
प्रतिबिम्बितमाननं मृषा स्यादिति भावत्कमतानुगोक्तिका च ॥ ४५ ॥

न च मायिकजीवनिष्ठमौढ्येश्वरसार्वज्ञविरुद्धधर्मबाधात् ।
उभयोरपि चित्स्वरूपताया अविशेषादभिदैव वास्तवीति ॥ ४६ ॥

न हि मानशतैः स्थितस्य बाधाऽपरया दत्तजलाञ्जलिर्भिदा स्यात् ।
विपरीतहयत्वगोत्वबाधाद्द्वयपक्षोर्निजरूपकैक्ययुक्त्या । ४७ ॥

यदि मानगतस्य हानमिष्टं न भवेत्तर्हि न चेश्वरोऽहमस्मि ।
इति मानगतस्य जीवसर्वेश्वरभेदस्य न हानमप्यभीष्टम् ॥ ४८ ॥

इति युक्तिशतैः स नीलकण्ठः कविरक्षोभयदद्वितीयपक्षम् ।
निगमान्तवचःप्रकाश्यमानं कलभः पद्मवनं यथा प्रफुल्लम् ॥ ४९ ॥

अथ नीलगलोक्तदोषजालो भगवानेवमवोचदस्तु कामम् ।
शृणु तत्त्वमसीति संप्रदायश्रुतिवाक्यस्य परावरेऽभिसन्धिम् ॥ ५० ॥

ननु वाच्यगता विरुद्धताधीरिह सोऽसावितिवद्विरोधहाने ।
अविरोधि तु वाच्यमाददर्थं पदयुग्मं स्फुटमाह को विरोधः ॥ ५१ ॥

यदिहोक्तमतिप्रसञ्जनं भो न भवेन्नो हि गवाश्वयोः प्रमाणम् ।
अभिदाघटकं तयोर्यतः स्यादुभयोर्लक्षणयाऽभिदानुभूतिः ॥ ५२ ॥

ननु मौढ्यसमस्तवित्त्वधर्मान्वितजीवेश्वररूपतोऽतिरिक्तम् ।
उभयोः परिनिष्ठितं स्वरूपं बत नास्त्येव यतोऽत्र लक्षणा स्यात् ॥

इति चेन्न समीक्ष्यमाणजीवेश्वररूपस्य च कल्पितत्वयुक्त्या ।
तदधिष्ठितसत्यवस्तुनोऽद्धा नियमेनैव सदाऽभ्युपेयतायाः ॥ ५४ ॥

भवताऽपि तथा हि दृश्यदेहाद्यहमन्तस्य जडत्वमभ्युपेयम् ।
परिशिष्टमुपेयमेकरूपं ननु किञ्चिद्धि तदेव तस्य रूपम् ॥ ५५ ॥

जगतोऽसत एवमेव युक्त्या त्वनिरूप्यत्वत एव कल्पितत्वात् ।
तदधिष्ठितभूतरूपमेष्यं ननु किञ्चिद्धि तदीश्वरस्य सत्यम् ॥ ५६ ॥

तदिह श्रुतिगोभयस्वरूपे निरुपाधौ न हि मौढ्यसर्वविस्त्वे ।
न जपाकुसुमात्तलोहितिम्नः स्फटिके स्यान्निरुपाधिके प्रसक्तिः ॥ ५७ ॥

अपि भेदधियो यथार्थतायां न भयं भेददृशः श्रुतिर्ब्रवीतु ।
विपरीतदृशो ह्यनर्थयोगो न भिदाधीर्विपरीतधीर्यतः स्यात् ॥ ५८ ॥

अभिदा श्रुतिगाऽप्यतात्त्विकी चेत्पुरुषार्थश्रवणं न तद्गतौ स्यात् ।
अशिवोऽहमिति भ्रमस्य शास्त्राद्विधुमानत्वगतेरिवास्ति बाधः ॥ ५९ ॥

तदबाधितकल्पनाक्षतिर्नो श्रुतिसिद्धात्मपरैक्यबुद्धिबाधः ।
निगमात् प्रबलं विलोक्यते माकरणं येन तदीरितस्य बाधः ॥ ६० ॥

ऋषिभिर्बहुधा परात्मतत्त्वं पुरुषार्थस्य च तत्त्वमप्यथोक्तम् ।
तदपास्य निरूपितप्रकारो भवताऽसौ कथमेक एव धार्यः ॥ ६१ ॥

अयमेव विदन्वितश्च कर्ता न हि कर्तृत्वमचेतनस्य दृष्टम् ।
अत एव भुजेर्मवेत्स कर्ता परमोक्तृत्वमतिप्रसङ्गदुष्टम् ॥ ६५ ॥

पुरुषार्थ इहैष दुःखनाशः सकलस्यापि सुखस्य दुःखयुक्त्वात् ।
अतिहेयतया पुमर्थता नो विषपृक्तान्नवदित्यमेययुक्तेः ॥ ६६ ॥

इति चेन्न सुखादिचिलताया मनसो धर्मतयाऽऽत्ममेदकत्वम् ।
न कथञ्चन युज्यते पुनः सा घटयेत्प्रत्युत मानसीयमेदम् ॥ ६७ ॥

चितियोगविशेष एव देहे कृतिमत्ताघटकोऽप्यचेतने स्यात् ।
तदभावत एव कर्तृता स्यान्न तृणादेरिति कल्पनं वरीयः ॥ ६८ ॥

विषयोत्थसुखस्य दुःखयुक्तेऽप्यलयं ब्रह्मसुखं न दुःखयुक्तम् ।
पुरुषार्थतया तदेव गम्यं न पुनस्तुच्छकदुःखनाशमात्रम् ॥ ६९ ॥

इति युक्तिशतोपबृंहितार्थैर्वचनैः श्रुत्यनरोधसंविदश्छैः ।
यतिरात्ममतं प्रसाध्य शैवं परकृद्दर्शनदारुर्गर्जपीव् ॥ ७० ॥

विजितो यतिभूभृता स शैवः सह गर्वेण विसृज्य च स्वभाष्यम् ।
शरणं प्रतिपेदिवान् महर्षिं हरदत्तप्रमुखैः सहाऽऽत्मशिष्यैः ॥ ७१ ॥

यमिवाम्बरमेण नीलकण्ठं जितमाकर्ण्य मनीषिधुर्यवर्यम् ।
सहसोदयनादयः कवीन्द्राः परमद्वैतमुपश्रकम्पिरे स्म ॥ ७२ ॥

विषयेषु वितत्य नैजमाप्याप्यय सौराष्ट्रमुखेषु तत्र तत्र ।
बहुधा विबुधैः प्रशस्यमानो भगवान् द्वारवतीं पुरीं विवेश ॥ ७३ ॥

भुजयोरतितप्तशङ्खचक्राकृतिलोहाहतसंभृतव्रणाङ्काः ।
शरदण्डसहोदरोर्ध्वपुण्ड्रास्तुलसीपर्णसनाथकर्णदेशाः ॥ ७४ ॥

शतशः समपेत्य पाञ्चरात्रास्त्वमूनं पञ्चमिदाविदो वदन्तः ।
मुनिशिष्यवररतिप्रगल्भैर्मृगराजैरिव कुञ्जराः प्रभग्नाः ॥ ७५ ॥

इति चेन्न समीक्ष्यमाणजीवेश्वररूपस्य च कल्पितत्वयुक्त्या ।
तदधिष्ठितसत्यवस्तुनोऽद्धा नियमेनैव सदाऽभ्युपेयतायाः ॥ ५४ ॥

भवताऽपि तथा हि दृश्यदेहाद्यहमन्तस्य जडत्वमभ्युपेयम् ।
परिशिष्टमुपेयमेकरूपं ननु किञ्चिद्धि तदेव तस्य रूपम् ॥ ५५ ॥

जगतोऽसत एवमेव युक्त्या त्वनिरूप्यत्वत एव कल्पितत्वात् ।
तदधिष्ठितभूतरूपमेष्यं ननु किञ्चिद्धि तदीश्वरस्य सत्यम् ॥ ५६ ॥

तदिह श्रुतिगोभयस्वरूपे निरुपाधौ न हि मौढ्यसर्ववित्त्वे ।
न जपाकुसुमाच्चलोहितिम्नः स्फटिके स्यान्निरुपाधिके प्रसक्तिः ॥ ५७ ॥

अपि भेदधियो यथार्थतायां न भयं भेददृशः श्रुतिर्ब्रवीतु ।
विपरीतदृशो ह्यनर्थयोगो न भिदाधीर्विपरीतधीर्यतः स्यात् ॥ ५८ ॥

अभिदा श्रुतिगाऽप्यतात्त्विकी चेत्पुरुषार्थश्रवणं न तद्गतौ स्यात् ।
अशिवोऽहमिति भ्रमस्य शास्त्राद्विधुमानत्वगतेरिवास्ति बाधः ॥ ५९ ॥

तदबाधितकल्पनाश्रुतिर्नो श्रुतिसिद्धात्मपरैक्यबुद्धिबाधः ।
निगमात् प्रबलं विलोक्यते भाकरणं येन तदीरितस्य बाधः ॥ ६० ॥

ऋषिभिर्बहुधा परात्मतत्त्वं पुरुषार्थस्य च तत्त्वमप्यथोक्तम् ।
तदपास्य निरूपितप्रकारो भवताऽसौ कथमेक एव धार्यः ॥ ६१ ॥

प्रबलश्रुतिमानतो विरोधे बलहीनस्मृतिवाच एव नेयाः ।
इति नीतिबलात्त्रयीविरुद्धं न ऋषीणां वचनं प्रमात्वमीयात् ॥ ६२ ॥

ननु युक्तियुतं महर्षिवाक्यं श्रुतिवद्ग्राह्यनमं परं तथा हि ।
प्रतिदेहमसौ विभिन्न आत्मा सुखदुःखादिविचित्रतावलोकात् ॥ ६३ ॥

यदि चाऽऽत्मन एकता तदानीमतिदुःखी युवराजसौख्यमीयात् ।
अमुकः ससुखोऽमुकस्तु दुःखीत्यनुभूतिर्न भवेत्तयोरभेदात् ॥ ६४ ॥

अयमेव विदन्वितश्च कर्ता न हि कर्तृत्वमचेतनस्य दृष्टम् ।
अत एव भुजेर्भवेत्स कर्ता परभोक्तृत्वमतिप्रसङ्गदुष्टम् ॥ ६५ ॥

पुरुषार्थ इहैष दुःखनाशः सकलस्यापि सुखस्य दुःखयुक्त्वात् ।
अतिहेयतया पुमर्थता नो विषपृक्तान्नवदित्यभेद्ययुक्तेः ॥ ६६ ॥

इति चेन्न सुखादिचिलताया मनसो धर्मतयाऽऽत्मभेदकत्वम् ।
न कथञ्चन युज्यते पुनः सा घटयेत्प्रस्तुत मानसीयभेदम् ॥ ६७ ॥

चितियोगविशेष एव देहे कृतिमत्ताघटकोऽप्यचेतने स्यात् ।
तदभावत एव कर्तृता स्यान्न तृणादेरिति कल्पनं वरीयः ॥ ६८ ॥

विषयोत्थसुखस्य दुःखयुक्त्वेऽप्यलयं ब्रह्मसुखं न दुःखयुक्तम् ।
पुरुषार्थतया तदेव गम्यं न पुनस्तुच्छकदुःखनाशमात्रम् ॥ ६९ ॥

इति युक्तिशतोपबृंहितार्थैर्वचनैः श्रुत्यवरोधसंविदर्ह्यैः ।
यतिरात्ममतं प्रसाध्य शैवं परकृद्दर्शनदारुणैरजैषीत् ॥ ७० ॥

विजितो यतिभूभृता स शैवः सह गर्वेण विसृज्य च स्वभाष्यम् ।
शरणं प्रतिपेदिवान् महर्षिं हरदत्तप्रमुखैः सहाऽऽत्मशिष्यैः ॥ ७१ ॥

यमितामृतभेण नीलकण्ठं जितमाकर्ण्य मनीषिधुर्यवर्यम् ।
सहसोदयनादयः कवीन्द्राः परमद्वैतमुपश्वकम्पिरे स्म ॥ ७२ ॥

विषयेषु वितत्य नैजभाष्याण्यथ सौराष्ट्रमुखेषु तत्र तत्र ।
बहुधा विबुधैः प्रशस्यमानो भगवान् द्वारवतीं पुरीं विवेश ॥ ७३ ॥

भुजयोरनितप्तशङ्खचक्राकृतिलोहाहतसंभृतव्रणाङ्काः ।
शरदण्डसहोदरोर्ध्वपुण्ड्रास्तुलसीपर्णसनाथकर्णदेशाः ॥ ७४ ॥

शतशः समयेत्य पाञ्चरात्रास्त्वमृतं पञ्चभिदाविदां वदन्तः ।
मुनिशिष्यवरैरतिप्रगल्भैर्मृगराजैरिव कुञ्जराः प्रमग्नाः ॥ ७५ ॥

इति वैष्णवशैवशाक्तसौरप्रमुखानात्मवशंवदान्विधाय ।
अतिवेलवचोझरीनिरस्तप्रतिवाद्युज्जयिनीं पुरीमयासीत् ॥ ७६ ॥

सपदि प्रतिनादितः पयोदस्वनशङ्काकुलगेहकेकिजालैः ।
शशभृन्मुकुटार्हणामृदङ्गध्वनिरश्रूयत तत्र मूर्छिताशः ॥ ७७ ॥

मकरध्वजविद्विडासिविद्याश्रमहृत्पुष्पसुगन्धवन्मरुद्भिः ।
अगरूद्भवधूपधूपितांशं स महाकालनिवेशनं विवेश ॥ ७८ ॥

भगवानभिवन्द्य चन्द्रमौलिं मुनिवृन्दैरभिवन्द्यपादपद्मः ।
श्रमहारिणि मण्डपे मनोज्ञे स विशश्राम विसृत्वरप्रभावः ॥ ७९ ॥

कथये कथयास्मदीयवार्तामिह सौम्येति स भट्टभास्कराय ।
विससर्ज वशंवदाग्रगण्यं मुनिरभ्यर्णगतं सनन्दनार्यम् ॥ ८० ॥

अभिरूपकुलावतंसभूतं बहुधाव्याकृतसर्ववेदराशिम् ।
तमयत्ननिरस्तदुःसहस्तं प्रतिपद्येत्थमुवाच वावदूकः ॥ ८१ ॥

जयति स्म दिगन्तगीतकीर्तिर्भगवाञ्शङ्करयोगिचक्रवर्ती ।
प्रथयन् परमाद्वितीयतत्त्वं शमयंस्तत्परिपन्थिवादिदर्पम् ॥ ८२ ॥

स जगाद बुधाग्रगीर्भवन्तं कुमतोत्प्रेक्षितदुष्प्रवृत्तिजालम् ।
अभिभूय वयं त्रयीशिखानां समवादिष्म परावरेऽभिसन्धिम् ॥ ८३ ॥

तदिदं परिगृह्यतां मनीषिन् मनसाऽऽलोच्य निरस्य दुर्मतं स्वम् ।
अथवाऽस्मदुदग्रतर्कवज्रप्रतिघातात् परिरक्ष्यतां स्वपक्षः ॥ ८४ ॥

इति तामवहेलपूर्ववर्णां गिरमाकर्ण्य तदा स लब्धवर्णः ।
यशसां निधिरीपदात्तरोषस्तमुवाच प्रहसन् यतीन्द्रशिष्यम् ॥ ८५ ॥

ध्रुवमेष न शुश्रवानुदन्तं मम दुर्वादिवचस्ततीर्नुदन्तम् ।
परकीर्तिनिसाङ्कुरानदन्तं विदुषां मूर्धसु नानटत्पदं तम् ॥ ८६ ॥

मम चलगति सूक्तिगुम्फवृन्दे कणभुग्जल्पितमल्पतामुपैति ।
कपिलस्य पलायते प्रलापः सुधियां कैव कथाऽश्रुनावनानाम् ॥ ८७ ॥

इति वादिनमब्रवीत् सनन्दः कुशलोऽथैनमविज्ञ माऽस्मंमंस्थाः ।
न हि दारितभूधरोऽपि टङ्कः प्रभवेद्वज्रमणिप्रभेदनाय ॥ ८८ ॥

स तमेवमुदीर्य सीर्थकीर्तेरुपकण्ठं प्रतिपद्य सद्विदग्ध्यः ।
सकलं तदबोचदानुपूर्व्या स महात्माऽपि यतीशमाससाद ॥ ८९ ॥

अथ भास्करभस्करिप्रवीरौ बहुधाक्षेपसमर्थनप्रवीणौ ।
बहुभिर्वचनैरुदारवृत्तैर्व्यदधातां विजयैषिणौ विवादम् ॥ ९० ॥

अनयोरतिचित्रशब्दशय्यां दधतोर्दुर्नयभेदशङ्कयुक्त्योः ।
पटुवादमृधेऽन्तरं तटस्थाः श्रुतवन्तोऽपि न किञ्चनान्वविन्दन् ॥ ९१ ॥

अथ तस्य यतिः समीक्ष्य दार्ढ्यं निजपक्षाब्जशरज्जडाब्जभूतम् ।
बहुधाऽऽक्षिपदस्य पक्षमार्यो विबुधानां पुरतोऽप्रभातकल्पम् ॥ ९२ ॥

अथ भास्करवित्स्वपक्षगुप्त्यै विधुतो वाग्मिवरः प्रगल्भयुक्त्या ।
श्रुतिशीर्षवचःप्रकाश्यमेनं कविरद्वैतमपाकरिष्णुरूचे ॥ ९३ ॥

प्रशमिंस्त्वदुदीरितं न युक्तं प्रकृतिर्जीवपरात्मभेदिकेति ।
न भिनत्ति हि जीवगेशगा वोमयमावस्य तदुचरोद्भवत्वात् ॥ ९४ ॥

मुनिरेवमिहोत्तरं बभाषे मुकुरो वा प्रतिबिम्बबिम्बभेदी ।
कथमीरय वक्त्रमात्रगश्चेचितिमात्राश्रिदियं तथेति तुल्यम् ॥ ९५ ॥

चितिमात्रगतप्रकृत्युपाधेर्न्नहतो बिम्बपरात्मपक्षपातम् ।
प्रतिबिम्बितजीवपक्षपातो मुकुरस्येव विरुध्यते न जातु ॥ ९६ ॥

अविकारिनिरस्तसङ्गबोधैकरसात्माश्रयता न युज्यतेऽस्याः ।
अत एव विशिष्टसंश्रितत्वं प्रकृतेः स्यादिति नापि शङ्कनीयम् ॥ ९७ ॥

न हि मानकथा विशिष्टगत्वे भवदापादित ईक्षते तथा हि ।
अहमज्ञ इति प्रतीतिरेषा न हि मानत्वमिहाश्नुते तथा चेत् ॥ ९८ ॥

अनुभव्यहमित्यपि प्रतीतेरनुभूतेश्च विशिष्टनिष्ठता स्यात् ।
अजडानुभवस्य नो जडान्तःकरणस्थत्वमितीष्टता न तस्याः ॥ ९९ ॥

ननु दाहकता यथाग्नियोगादधिकूटं व्यपदिश्यते तथैव ।
अनुभूतिमदात्मयोगतोऽन्तःकरणे सा व्यपदिश्यतेऽनुभूतिः ॥ १०० ॥

इति चेन्नैवमिहापि तस्य मायाश्रयचिन्मात्रयुते तथोपचारः ।
न पुनस्तदुपाधियोगतोऽन्तःकरणस्येति समाऽन्यथागतिर्हि ॥ १०१ ॥

न च तत्र हि बाधकस्सत्त्वादियमस्तु प्रकृतेर्न साऽस्त्यबाधात् ।
इति वाच्यमिहापि तज्जचित्ते तदुपाश्रित्यश्रुतेश्च बाधकत्वात् ॥ १०२ ॥

अधिसुप्त्यपि चित्तवर्ति तत्स्याद्यदि चाज्ञानमिदं हृदाश्रितं स्यात् ।
तदिहास्ति न मानमुक्तरीत्या प्रकृतेर्दृश्यविशिष्टनिष्ठतायाम् ॥ १०३ ॥

ननु न प्रतिबन्धिकैव सुप्ताविति सा दूरत एव चिद्गतेति ।
प्रतिबन्धकशून्यता तु सुप्तेः परमात्मैक्यगतेः सतेति वाच्यात् ॥

न च तत्र च तत्स्थितिप्रतीतिः सति संपद्य विदुर्न हीति वाक्यात् ।
श्रुतिगीस्तदधिक्षिपत्यभावप्रतिपत्तेर्न च निह्नवोऽत्र नेति ॥ १०५ ॥

किमु नित्यमनित्यमेव चैतत्प्रथमो नेह समस्ति युक्त्यभावात् ।
अनिवर्तकपत्ववतोऽस्य नान्त्यो न हि भिन्द्यादविरोधि चित्प्रकाशः ॥

न च तच्छमयेज्जडप्रकाशोऽप्यविरोधात् सुतरां जडत्वतोऽस्य ।
तदिहाप्रतिबन्धकत्वमस्य प्रभवेत् किंत्विह तद्भ्रमाग्रहादि ॥ १०७ ॥

इति चेदिदमीरय प्रभः को मनुजोऽहं त्विति शेमुषीति चेन्न ।
श्रुतिविस्मृतिशीलिना नवाहो गदितुः सर्वपदार्थसङ्करस्य ॥ १०८ ॥

प्रमितित्वमुपाश्रयन् प्रतीतेरमुकः खण्ड इति स्वमात्रसिद्धात् ।
मिदभिद्द्वयगोचरत्वहेतोर्धियमेतां तु किमित्युपेक्षसे त्वम् ॥ १०९ ॥

अनुमानमिदं तथा च सिद्धं विमता धीः प्रमितिर्भिदाभिदत्वात् ।
इह चारु निदर्शनं भवेत् सा तव खण्डोऽयमिति प्रतीतिरेषा ॥ ११० ॥

ननु संहननात्मधीः प्रमाणं न भवत्येव निषिध्यमानगत्वात् ।
इदमिति प्रतिपन्नरूप्यधीवत्प्रबला सत्प्रतिपक्षतेति चेन्न ॥ १११ ॥

व्यभिचारयुतत्वतोऽस्य खण्डः पशुरित्यत्र तदन्यधीश्च मुण्डे ।
इतरत्र निषिध्यमानखण्डोल्लिखितत्वेन निरुक्तहेतुमत्वात् ॥ ११२ ॥

ननु हेतुरयं विवक्ष्यतेऽत्र प्रतिपन्नोपधिके निषेधगत्वम् ।
इति चेन्न विवक्षितस्य हेतोर्व्यभिचारात् पुनरप्यमुत्र चैव ॥ ११३ ॥

ननु गोत्व उपाधिके त्वमुष्य प्रतिपन्नस्य हि तत्र नो निषेधः ।
अपि तु प्रथमानमुण्ड इत्यत्र तथा च व्यभिचारिता न हेतोः ॥ ११४ ॥

इति चेन्न विकल्पनासहत्वात् किमु खण्डस्य तु केवले निषेधः ।
उत गोत्वसमन्विते स मुण्डे प्रथमो नो घटते प्रसक्त्यभावात् ॥

न हि जात्वपि खण्डके प्रसक्तः परमुण्डस्त्विति संप्रसक्त्यभावः ।
चरमोऽपि न गोत्वयुक्तमुण्डे खलु खण्डस्य निषेधकाल एव ॥ ११६ ॥

स्वविशेषणभूतगोत्व एव स्फुटमेतस्य निषेधनं ध्रुवं स्यात् ।
तदिहेदितहेतुलक्षणतोऽस्य व्यभिचारो दृढवज्रलेप एव ॥ ११७ ॥

ननु भातितरामुपाधिरत्रादलदेतद्द्वयवर्तितेति चेन्न ।
महमोऽनुभवेन साधनव्यापकभावादवगत्यनन्तरं च ॥ ११८ ॥

ननु तद्द्वयवद्गसंच्छिदाया इह तर्केण कमित्यनेन मुक्तौ ।
श्रुतिवाक्यगतेन संप्रतीतेर्व्यवहर्तुर्न कथं छिदेति चेन्न ॥ ११९ ॥

तदिदं घटते मतेऽस्मदीये तदबोधोल्लसितत्वतोऽखिलस्य ।
तदबोधलये लयोपपत्तेर्जगतः सत्यतया छिदा न वै स्यात् ॥ १२० ॥

ननु पञ्चसु तु स्थलेषु भेदो ह्यभिदा नो तु शरीरदेहिनोस्ते ।
प्रथितस्थलपञ्चकेतरत्वात् फलिता ह्यत्र तथा च हेत्वसिद्धिः ॥ १२१ ॥

इति चेन्न विकल्पनासहत्वान्मिलितानां भिदभेदतन्त्रता किम् ।
उत वा पृथगेव तत्र नाऽद्यो मिलिताः पञ्च न हि क्वचिद्यतः स्युः ॥

चरमोऽपि न युज्यते तदाऽङ्गाङ्गिकभावस्य च तन्त्रता न किं स्यात् ।
न च योजकगौरवं च दोषः प्रकृते तस्य तवापि संभवत्वात् ॥ १२३ ॥

अपि चान्यतमस्य जातितद्वत्प्रभृतीनां घटकत्व आग्रहश्चेत् ।
अपि सोऽस्त न दुर्लभश्चिदात्माङ्गकयोः कारणकार्यभावभावात् ॥१२४॥

न च वाच्यमिदं परात्मजत्वात्सकलस्यापि न जीवकार्यतेति ।
तदभेदत एव सर्वकस्याप्युपपत्तेरिह जीवकार्यतायाः ॥ १२५ ॥

तदसिद्धिमुखानुमानदोषानुदयादुक्तनयस्य निर्मलत्वम् ।
भ्रमधीप्रमितित्ववेदिनोऽस्तत्त्व न भ्रान्तिपदार्थ एव सिध्येत् ॥ १२६ ॥

अपि च भ्रम एष किं तवान्तःकरणस्येति चिदात्मनोऽथवाऽसौ ।
परिणाम इहाऽऽदिमो न तस्याऽऽत्मगतत्वानुभवस्य भङ्गपत्तेः ॥१२७॥

ननु रक्ततमप्रसूनयोगात् स्फटिके संस्फुरणं यथाऽरुणिम्नः ।
भ्रमसंयुतचित्तयोगतोऽस्य भ्रमणस्यानुभवस्तथाऽऽत्मनि स्यात् ॥१२८॥

इति चेदयमीरयाऽऽत्मयोगो भ्रमणस्याऽऽश्रित एष सम्भसन्वा ।
प्रथमो घटते न संसृजेस्तेऽपरथाख्यातिवदस्य शून्यकत्वात् ॥ १२९ ॥

चरमोऽपि न युज्यतेऽपरोक्षप्रथनस्यानुपपद्यमानतायाः ।
परिणामविशेष आत्मनोऽसौ भ्रम इत्येष न युज्यतेऽन्त्यपक्षः ॥ १३० ॥

असमभागतयाऽऽत्मनो निरस्तेतरयुक्तेः परिणत्ययोग्यतायाः।
परिणत्ययुजेश्च योग्यतायामपि बुद्ध्याकृतितश्चिदात्मनोऽस्य ॥ १३१ ॥

न हि नित्यचिदाश्रयप्रतीचः परिणामः पुनरन्यचित्स्वरूपः।
गुणयोः समुदायगत्ययोगाद्गुणतावान्तरजातितः सजात्योः ॥ १३२ ॥

युगपत्समवैति नो हि शौक्ल्यद्वयकं यत्र च कुत्रचिद्यदेतत्।
ननु चिन्न गुणो गुणी तथा च प्रसरेऽनोदितदुष्टतेति चेन्न ॥ १३३ ॥

कटकाश्रयभूतदीप्तहेम्नो रुचकाधारकभाववत्तथैव।
अविनाशिचिदाश्रयस्य भूयोऽन्यचिदाधारतया स्थितेरयोगात् ॥ १३४ ॥

न च संस्कृतिरग्रहोऽप्यविद्या भ्रमशब्दार्थनिरुक्त्यसंभवेऽपि।
भ्रमसंज्ञितवस्त्वसंभवेन भ्रमसंपादितसंस्कृतेरयोगात् ॥ १३५ ॥

अपि नाग्रहणं चितेरभावश्चितिरूपग्रहणस्य नित्यतायाः।
तदसंभवतो न ध्वस्यभावस्तदभावेऽपि चिदात्मनोऽवभासात् ॥ १३६ ॥

न च मङ्कमीक्ष्यते न तस्योपगमे दुःखजडानृतात्मकस्य।
इति वाच्यमखण्डवृत्तिरूढेश्वरबोधस्य निवर्तकत्वयोगात् ॥ १३७ ॥

अपि चेष्टतदन्यहेतुबीजे जगतः कृत्यकृती न ते घटेते।
सकलव्यवहारसङ्करत्वाचदलं जीवनिकाऽपि दुर्लभा ते ॥ १३८ ॥

इति युक्तिशतैरमर्त्यकीर्तिः सुमतीन्द्रं तमतन्द्रितं स जित्वा।
श्रुतिभावविरोधिभावभाजं विमतग्रन्थममन्थरं ममन्थ ॥ १३९ ॥

इति भास्करदुर्मतेऽभिभूते भगवत्पादकथासुधा प्रसस्रे।
घनवार्षिकवारिवाहजाले विगते शारदचन्द्रचन्द्रिकेव ॥ १४० ॥

स कथाभिरवन्तिषु प्रसिद्धान् विबुधान् बाणमयूरदण्डिमुख्यान्।
शिथिलीकृतदुर्मताभिमानान्निजभाष्यश्रवणोत्सुकांश्चकार ॥ १४१ ॥

प्रतिपद्य तु वाह्लिकान् महर्षौ विनयिभ्यः प्रविवृण्वति स्वभाष्यम् ।
अवदन्नसहिष्णवः प्रवीणाः समये केचिदथाऽऽर्हताभिधाने ॥ १४२ ॥

ननु जीवमजीवमाश्रवं च श्रितवत्संवरनिर्जरौ च बन्धः ।
अपि मोक्ष उपैषि सप्तसंख्यान्न पदार्थान् कथमेव सप्तभङ्ग्या ॥ १४३ ॥

कथयाऽर्हत जीवमस्तिकायं स्फुटमेवंविध इत्युवाच मौनी ।
अवदत्स च देहतुल्यमानो दृढकर्माष्टकवेष्टितश्च विद्वन् ॥ १४४ ॥

अमहाननणुर्घटादिवत्स्यात्स न नित्योऽपि च मानुषाच्च देहात् ।
गजदेहमयन्विशेन्न कृत्स्नं प्रविशेच्च प्लुषिदेहमप्यकृत्स्नः ॥ १४५ ॥

उपयान्ति च केचन प्रतीका महता संहननेन सङ्गमेऽस्य ।
अपयान्त्यधिजग्मुषोऽल्पदेहं तदयं देहसमः समश्नुतेश्च ॥ १४६ ॥

उपयन्त इमे तथाऽपयन्तो यदि वर्ष्मेव न जीवतां भजेयुः ।
प्रभवेयुरनात्मनः कथं ते कथमात्मावयवाः प्रयन्तु तस्मिन् ॥ १४७ ॥

जनितारहिताः क्षयेण हीनाः समुपायान्त्यपयान्ति चाऽऽत्मनस्ते ।
अमुकोपचितः प्रयाति कृत्स्नं त्वमुकश्चापचितः प्रयात्यकृत्स्नम् ॥

किमचेतनतोत चेतनत्वं वद तेषां चरमे विरुद्धमत्या ।
वपुरुन्मथितं भवेत्तु पूर्वं वत कार्त्स्न्येन वपुर्न चेतयेयुः ॥ १४९ ॥

चलयन्ति रथं यथैकमत्या बहवो वाजिन एवमप्रतीताः ।
इतरेतरमङ्गमेजयन्तु क्षपते चेतनतामपि प्रपद्य ॥ १५० ॥

बहवोऽपि नियामकस्य सत्त्वात्सुमते तत्र भजेयुरैकमत्यम् ।
कथमत्र नियामकस्य तद्वद्विरहात् कस्यचिदप्यदो घटेत ॥ १५१ ॥

उपयान्ति न चापयान्ति जीवावयवाः किन्तु महत्तरे शरीरे ।
विकसन्ति च संकुचन्त्यनिष्टे यतिवर्यात्र निदर्शनं जलौका ॥ १५२ ॥

यदि चैवममी सविक्रियत्वाद्घटवच्चे च विनश्वरा भवेयुः ।
इति नश्वरतां प्रयाति जीवे कृतनाशाकृतसङ्गमौ भवेताम् ॥ १५३ ॥

अपि चैवमलाबुवद्‌ध्रुवाब्धौ निजकर्माष्टकभारमग्नजन्तोः ।
सततोर्ध्वगतिस्वरूपमोक्षस्तव सिद्धान्तसमर्थितो न सिध्येत् ॥ १५४ ॥

अपि साधनभूतसप्तभङ्गीनयमप्यार्हत नाऽऽद्रियामहे वै ।
परमार्थसतां विरोधभाजां स्थितिरेकत्र हि नैकदा घटेत ॥ १५५ ॥

इति माध्यमिकेषु भग्नदर्पेष्वथ भाष्याणि स नैमिषे वितत्य ।
दरदान् भरतांश्च शूरसेनान् कुरुपाञ्चालमुखान् बहूनजैषीत् ॥ १५६ ॥

पटुयुक्तिनिकृत्तसर्वशास्त्रं गुरुभट्टोदयनादिकैरजय्यम् ।
स हि खण्डनकारमूढदर्पं बहुधा व्युह्य वशंवदं चकार ॥ १५७ ॥

तदनन्तरमेष कामरूपानधिगत्याभिनवोपशब्दगुप्तम् ।
अजयत्किल शाक्तभाष्यकारं स च भग्नो मनसेदमालुलोचे ॥ १५८ ॥

निगमाब्जविकासिबालभानोर्न समोऽस्मुष्य विलोक्यते त्रिलोक्याम् ।
न कथंचन मद्वशंवदोऽसौ तदमुं दैवतकल्पया हरेयम् ॥ १५९ ॥

इति गूढमसौ विचिन्त्य पश्चात् सह शिष्यैः सहसा स्वशाक्तभाष्यम् ।
परिहृत्य जनापवादभीत्या शमिनः शिष्य इवान्ववर्ततैषः ॥ १६० ॥

निजशिष्यपदं गतानुदीच्यानिति कृत्वाऽथ विदेहकौशलाद्यैः ।
विहितापचितिस्तयाऽङ्गवङ्गेष्वयमास्तीर्य यशो जगाम गौडान् ॥ १६१ ॥

अभिभूय मुरारिमिश्रवर्यं सहसा चोदयनं विजित्य वादे ।
अवधूय च धर्मगुप्तमिश्रं स्वयशः प्रौढमगापयत्स गौडान् ॥ १६२ ॥

पूर्वं येन विमोहिता द्विजवरास्तस्याप्ततोऽरीन् कलौ
बुद्धस्य प्रतिभेद मस्करिवरस्तोन् भास्करादीन् क्षणात् ।

शास्त्राम्नायविनिन्दकेन कुधिया कूटप्रवादाग्रहा-
न्निष्णातो निगमागमादिषु मतं दक्षस्य कूटग्रहे ॥ १६३ ॥

शाक्तैः पाशुपतैरपि क्षपणकैः कापालिकैर्वैष्णवै-
रप्यन्यैरखिलैः खिलं खलु खलैर्दुर्वादिभिर्वैदिकम् ।
मार्गं रक्षितुमुग्रवादिविजयं नो मानहेतोर्व्यधा-
त्सर्वज्ञो न यतोऽस्य संभवति सम्मानग्रहग्रस्तता ॥ १६४ ॥

दिष्टे पङ्कजविष्टरेण जगतामाद्येन तत्सूनुभि-
र्निर्दिष्टे सनकादिभिः परिचिते प्राचेतसाद्यैरपि ।
श्रौताद्वैतपथे परात्मभिदुरान् दुर्वादिनः कण्टकान्
प्रोद्धृत्याथ चकार तत्र करुणो मोक्षाध्वगक्षुण्णताम् ॥ १६५ ॥

शान्तिर्दान्तिविरागते ह्युपरतिः क्षान्तिः परैकाग्रता
श्रद्धेति प्रथिताभिरेधिततनौ षड्वक्त्रवन्मातृभिः ।
भिक्षुक्षोणिपतौ पिचण्डिलतरोखण्डातिकण्डूचल-
त्पाखण्डासुरखण्डनैकरसिके बाधा बुधानां कुतः ॥ १६६ ॥

यत्राऽऽरम्भजकाहलाकलकलैर्लोकायतो विद्रुतः
काणाः काणभुजास्तु सैन्यरजसा सांख्यैर्धृताऽसांख्यधीः ।
बुद्ध्वा तेषु पलायितेषु सहसा योगाः सहैवाद्रवन्
को वा वादिभटः पदुर्भुवि भवेद्वस्तुं पुरस्तान्मुनेः ॥ १६७ ॥

उद्दण्डे पणबन्धबन्धुरतरे वाचंयमक्ष्मापतेः
पूर्वं मण्डनखण्डने समुदभूद्यो डिण्डिमाडम्बरः ।
जाताः शब्दपरम्परास्तत इमाः पाखण्डदुर्वादिनां
मद्य भोलतटाटवीषु दधते दावानलज्वालताम् ॥ १६८ ॥

बुद्धो युद्धसमुद्यतः किल पुनः स्थित्वा क्षणाद्विद्रुतः
कोणे द्राक्कणभुग्व्यलीयत तमःस्तोमावृतो गौतमः ।
भग्नोऽसौ कपिलः पलायत ततः पातञ्जलाश्चाञ्जलिं
चक्रुस्तस्य यतीशितुश्चतुरता केनोपमीयेत सा ॥ १६९ ॥

हस्तग्राहं गृहीताः कतिचन समरे वैदिका वादियोधाः
काणादाद्याः परे तु प्रसभमभिहता हन्त लोकायताद्याः ।
गाढं बन्दीकृतास्ते सुचिरमथ पुनः स्वस्वराज्ये नियुक्ताः
सेवन्ते तं विचित्रा यतिधरणिपतेः शूरता वा दया वा ॥१७०॥

शान्त्याद्यर्णवबाडवानलशिखा सत्याभ्रवात्या दया-
ज्योत्स्नादर्शनिशाऽथ शान्तिनलिनीराकाशशाङ्कद्युतिः ।
आस्तिक्यद्रुमदावपावकनवज्वालावली सत्कथा-
हंसीप्रावृडखण्डि दण्डपतिना पाखण्डवाङ्मण्डली ॥ १७१ ॥

अद्वैतामृतवर्षिभिः परगुरुव्याहारधाराधरैः
कान्तैर्हन्त समन्ततः प्रसृमरैरुत्कृत्ततापत्रयैः ।
दुर्भिक्षं स्वपरैकताफलगतं दुर्भिक्षुसंपादितं
शान्तं संप्रति खण्डिताश्च निबिडाः पाखण्डचण्डातपाः ॥

शान्तानां सुभटाः कपालिकप्रद्राहग्रहव्यापृताः
काणादप्रतिहारिणः क्षपणकक्षोणीशवैतालिकाः ।
सामन्ताश्च दिगम्बरान्वयप्रभुश्चार्वाकवंशांकुरा
नम्याः केचिदलं मुनीश्वरगिरा नीताः कथाशेषताम् ॥

इति सकलदिशासु द्वैतवार्तानिवृत्तौ
स्वयमथ परितस्तारायमद्वैतवर्त्म ।

प्रतिदिनमपि कुर्वन् सर्वसन्देहमोक्षं
रविरिव तिमिरौघे संप्रशान्ते महः स्वम् । १७४ ॥

इति श्रीमाधवीये तत्तदाशाजयकौतुकी ।
संक्षेपशङ्करजये सर्गः पञ्चदशोऽभवत् ॥

( आदितः श्लोकाः–१७३६ )

## ॥ षोडशः सर्गः ॥

### ( श्रीमदाचार्याणां शारदापीठवासवर्णनम् )

अथ यदा जितवान्यतिशेखरोऽभिनवगुप्तमनुत्तममान्त्रिकम् ।
स तु तदाऽपजितो यतिगोचरं हृतमनाः कृतवानपगोरणम् ॥ १ ॥

स ततोभिचचार मूढबुद्धिः यतिशार्दूलममुं प्ररूढरोषः ।
अचिकित्स्यतमो भिषग्भिरस्मादजनिष्टास्य भगन्दराख्यरोगः ॥ २ ॥

अचिकित्स्यभगन्दराख्यरोगप्रसरच्छोणितपङ्किलस्वशाट्याः ।
अजुगुप्सद्विशोधनादिरूपां परिचर्यामकृतास्य तोटकार्यः ॥ ३ ॥

भगन्दराख्याधिनिपीडितं गुरुं निरीक्ष्य शिष्याः समबोधयन् शनैः ।
नोपेक्षणीयो भगवन् महामयस्त्वपीडितः शत्रुरिवर्द्धिमाप्नुयात् ॥ ४ ॥

ममत्वहानाद्भवता शरीरके न गण्यते व्याधिकृतातिरीदृशी ।
पश्यन्त एवान्तिकवर्तिनो वयं भृशातुराः स्मः सहसा व्यथासहाः ॥

चिकित्सका व्याधिनिदानकोविदाः संप्रच्छनीया भगवन्नितस्ततः ।
प्रत्यक्षरत्संप्रति सन्ति पूरुषा जीवातुवेदे गदितार्थसिद्धिदाः ॥ ६ ॥

उपेक्षमाणेऽपि गुरावनास्थया शरीरकादौ सुतमात्मनीश्वरः।
नोपेक्षणीयं गुरुदुःखदग्धभिर्दुःखं विनेयैरिति शास्त्रनिश्चयः॥ ७॥

स्वस्थे भवत्पादसरोरुहद्वये स्वस्था वयं यन्मधुपायिवृत्तयः।
तस्माद्भवेत्तावकविग्रहो यथा स्वस्थस्तथा वाञ्छति पूज्य नो मनः॥

व्याधिर्हि जन्मान्तरपापपाको भोगेन तस्मात् क्षपणीय एषः।
अभुज्यमानः पुरुषं न मुञ्चेज्जन्मान्तरेऽपीति हि शास्त्रवादः॥ ९॥

व्याधिर्द्विधाऽसौ कथितो हि विज्ञैः कर्मोद्भवो धातुकृतस्तथेति।
आद्यक्षयः कर्मण एव लीनाचिकित्सया स्यादपरोऽदितस्य॥ १०॥

संक्षीयतां कर्मण एव संक्षयाद्व्याधिः प्रवृत्तो न चिकित्स्यते मया।
पतेच्छरीरं यदि तन्निमित्ततः पतत्ववश्यं न बिभेमि किञ्चन॥ ११॥

सत्यं गुरो ते न शरीरलोभः स्पृहालुता नस्तु चिराय तस्मै।
त्वज्जीवनेनैव हि जीवनं नः पाथश्चराणां जलमेव तद्धि॥ १२॥

स्वयं कृतार्थाः परतुष्टिहेतोः कुर्वन्ति सन्तो निजदेहरक्षाम्।
तस्माच्छरीरं परिरक्षणीयं त्वयाऽपि लोकस्य हिताय विद्वन्॥ १३॥

निर्बन्धतो गुरुवरः प्रददावनुज्ञां दिग्भ्यो भिषग्वरसमानयनाय तेभ्यः।
नत्वा गुरुं प्रतिदिशं प्रययुः प्रहृष्टाः शिष्याः प्रवासकुशला हरिभक्तिभाजः॥

प्रायो नृपं कविजना भिषजो वदान्यं विद्याविनः प्रतिदिनं कुशला जुषन्ते।
तस्मादमी नृपपुरेषु निरीक्षणीया इत्येव चेतसि मनोरथमादधानाः॥

तेऽतीत्य देशान् बहुलान् स्वकार्यसिद्ध्यै क्वचिद्राजपुरे भिषग्भिः।
अवाप्य संदर्शनमापणानि समानयंस्तान् गुरुवर्यपार्श्वम्॥ १६॥

ततो द्विजेन्द्रैर्निजसेवकैस्तान् सन्तोषितान् स्वामिमतार्थदानैः।
यदत्र कर्तव्यमुदीरितं तत्कुर्मः स्वशक्त्येति वदाञ्जगौ सः॥ १७॥

उपगुदं भिषजः परिबाधते गद उदेत्य तनुं तनुमध्यगः ।
यदिदमस्य विधेयमिदं ध्रुवं वदत रोगतमस्तिमिरारयः ॥ १८ ॥

चिरमुपेक्षितवानहमेतकं दुरितजोऽयमिति प्रतिभाति मे ।
तदपि शिष्यगणैर्निरहिंस्यहं प्रहितवान् भवदानयनाय तान् ॥ १९ ॥

निगदिते मुनिनेति भिषग्वरा विदधिरे बहुधा गदसत्क्रियाः ।
न च शशाम गदो बहुनापदो विमनसः पटवो भिषजोऽभवन् ॥ २० ॥

अथ मुनिर्विमनस्त्वसमन्वितानिदमवोचत सिद्धभिषग्वरान् ।
अटत गेहमगात्समयो बहुर्गदहृते भवतामित ईयुषाम् ॥ २१ ॥

दिनचयं गणयन् पथिलोचनः प्रियजनो निवसेद्विरहातुरः ।
नरपतिर्भवतां शरणं ध्रुवं स च विदेशगमं श्रुतवान्यदि ॥ २२ ॥

कुपितवांश्च च वो वितरेन्नृपः फणितजीवितमक्षतशासनः ।
तुरगवन्नृपतिश्चलमानसो भिषजमन्यमसौ विदधीत वा ॥ २३ ॥

जनपदो विरलो गदहारकैर्बहुलरुग्णजनः प्रकृतेरतः ।
मृगयते भवतो भवतां गृहे गदिजनः सहितुं गदमक्षमः ॥ २४ ॥

पितृकृता जनिरस्य शरीरिणः समवनं गदहारिषु तिष्ठति ।
जनितमप्यफलं भिषजं विना भिषगसौ हरिरेव तनूभृतः ॥ २५ ॥

यदुदितं भवता वितथं न तत्तदपि न क्षमते व्रजितुं मनः ।
सुरस्रवं प्रविहाय मनुष्यगां व्रजितुमिच्छति कोऽत्र नरः सुधीः ॥ २६ ॥

इति निगद्य ययुर्भिषजां गणा विमनसः पटवोऽपि निजान् गृहान् ।
अथ मुनिर्विजहन्ममतां तनौ गुरुतरो गुरुदुःखमसोढ सः ॥ २७ ॥

प्रथितैरयनैः परःमहद्भिरगदंकारचयैरयाचिकित्स्ये ।
प्रबले सति [illegible] भगन्दराख्ये स्मरति स्म स्मरशासनं मुनीन्द्रः ॥ २८ ॥

संरंभासनशासनान्नियुक्तौ द्विजवेषं प्रविधाय भूमिमाप्तौ ।
उपसेदतुरश्विनौ च देवौ सुभुजौ साञ्जनलोचनौ सुपुस्तौ ॥ २९ ॥

यतिवर्य चिकित्सितुं न शक्या परकृत्याजनिता हि ते रुगेषा ।
इति तं समुदीर्य योगिवर्यं विबुधौ तौ प्रतिजग्मतुर्यथेतम् ॥ ३० ॥

तदनु स्वगुरोर्गदापनुत्त्यै परमन्त्रं तु जजाप जातमन्युः ।
मुहुरार्यपदेन धार्यमाणोऽप्यरिवर्गेऽप्यनुकम्पिनाऽब्जपादः ॥ ३१ ॥

अमुनैव ततो गदेन नीचः प्रतियातेन हतो ममार गुप्तः ।
मतिपूर्वकृतो महानुभावेष्वनयः कस्य भवेत्सुखोपलब्ध्यै ॥ ३२ ॥

स्वस्थः सोऽयं ब्रह्म सायं कदाचिद्ध्यायन् गङ्गापूरसङ्गार्द्रवातैः ।
आगच्छन्तं सैकते प्रत्यगच्छद्योगीशानं गौडपादाभिधानम् ॥ ३३ ॥

पाणौ फुल्लश्वेतपङ्केरुहश्रीमैत्रीपात्रीभूतभासा घटेन ।
आराद्राजत्कैरवानन्दसन्ध्यारागारक्ताम्भोदलीलां दधानम् ॥ ३४ ॥

पाणौ शोणाम्भोजबुद्ध्या समन्ताद्भ्राम्यद्भृङ्गीमण्डलीतुल्यकुल्याम् ।
अङ्गुल्यग्रासङ्गिरुद्राक्षमालामङ्गुष्ठाग्रेणासकृद्भ्रामयन्तम् ॥ ३५ ॥

आर्यस्याथो गौडपादस्य पादावभ्यर्च्यासौ शङ्करः पङ्कजाभौ ।
भक्तिश्रद्धासंभ्रमाक्रान्तचेताः प्रह्वस्तस्याग्रतः प्राञ्जलिः सन् ॥ ३६ ॥

सिञ्चन्नेनं क्षीरवाराशिवीचीसाधिव्यायाऽऽस्वयन्तः कटाक्षैः ।
दन्तज्योत्स्नादन्तुराश्चापि कुर्वन्नाशाः सूक्तिं संदधे गौडपादः ॥ ३७ ॥

कच्चित्सर्वां वेत्सि गोविन्दनाम्नो हृद्या विद्या संसृदुद्धारकध्या ।
कच्चित्तत्त्वं तच्चमानन्दरूपं नित्यं सच्चिन्निर्मलं वेत्सि देयम् ॥ ३८ ॥

भक्त्या युक्ताः स्वानुरक्ता विरक्ताः शान्ता दान्ताः सन्ततं श्रद्दधानाः ।
कच्चित्तत्त्वज्ञानकामा विनीताः शुश्रूषन्ते शिष्यवर्या गुरुं त्वाम् ॥ ३९ ॥

कच्चिन्नित्याः शत्रवो निर्जितास्ते कच्चित्प्राप्ताः सद्गुणाः शान्तिपूर्वाः ।
कच्चिद्योगः साधितोऽष्टाङ्गयुक्तः कच्चिच्चित्तं साधु चित्तत्त्वगं ते ॥४०॥

इत्यद्वैताचार्यवर्येण तेन प्रेम्णा पृष्टः शङ्करः साधुशीलः ।
भक्त्युद्रेकाद्बाष्पपर्याकुलाक्षो बध्नन्मूर्धन्यञ्जलिं व्याजहार ॥ ४१ ॥

यद्यत्पृष्टं स्पष्टमाचार्यपादैस्तत्तत्सर्वं भो भविष्यत्यवश्यम् ।
कारुण्याब्धेः कल्पयुष्मत्कटाक्षैर्दृष्टस्याऽऽहुर्दुर्लभं किंनु जन्तोः ॥ ४२ ॥

मूको वाग्मी मन्दधीः पण्डिताग्र्यः पापाचारः पुण्यनिष्ठेषु गण्यः ।
कामासक्तः कीर्तिमान्निःस्पृहाणामार्यापाङ्गालोकतः स्यात्क्षणेन ॥४३॥

लेशं वाऽपि ज्ञातुमीष्टे पुमान्कः सीमातीतस्याद्य युष्मन्महिम्नः ।
तुष्टाऽत्यन्तं तत्त्वविद्योपदेष्टा जातः साक्षाद्यस्य वैयासकिः सः ॥४४॥

आजानात्मज्ञानसिद्धं यमाराद्दौदासीन्याज्जातमात्रं व्रजन्तम् ।
प्रेमावेशात्पुत्र पुत्रेति शोचन्पाराशर्यः पृष्ठतोऽनुप्रपेदे ॥ ४५ ॥

यश्चाऽऽहूतो योगभाष्यप्रणेत्रा पित्रा प्राप्तः स प्रपञ्चैकभावम् ।
सर्वाहन्ताशीलनाद्योगभूमेः प्रत्याक्रोशं प्रातनोद्वृक्षरूपः ॥ ४६ ॥

तत्तादृक्षज्ञानपाथोधियुष्मत्पादद्वन्द्वं पद्मसौहार्दहृद्यम् ।
दैवादेतद्दीनदृग्गोचरश्चेद्भक्तस्यैतद्भागधेयं ह्यमेयम् ॥ ४७ ॥

इत्याकर्ण्याब्रवीद्गौडपादो वत्स श्रुत्वा वास्तवांस्त्वद्गुणौघान् ।
द्रष्टुं शान्तस्वान्तवन्तं मम त्वां गाढोत्कण्ठागर्भितं चित्तमासीत् ॥

कृतास्त्वया भाष्यमुखा निबन्धा मत्कारिकावारिजनुःसुखार्काः ।
श्रुत्वेति गोविन्दमुखात्प्रहृष्य दृग्ध्वनीनोऽस्मि तवाद्य विद्वन् ॥ ४९ ॥

इति स्फुटं प्रोक्तवते विनीतः सोऽश्रावयद्भाष्यमशेषमस्मै ।
विशिष्य माण्डूक्यगभाष्ययुग्मं श्रुत्वा प्रहृष्यन्निदमब्रवीत्तम् ॥ ५० ॥

मत्कारिकाभावविबोधितादङ्माण्डूक्यभाष्यश्रवणोत्थहर्षः ।
दातुं श्ररं ते विदुषां वराय प्रोत्साहयत्याशु वरं वृणीष्व ॥ ५१ ॥

स प्राह पर्यायशुकर्षिमीक्ष्य भवन्तमद्राक्षमविष्यरूपम् ।
वरः परः कोऽस्ति तथाऽपि चिन्तनं चिचत्त्वगं मेऽस्तु गुरो निरन्तरम् ॥

तथेति सोऽन्तर्धिमपात्तमोहे गते चिरञ्जीविमुनावथासौ ।
वृत्तान्तमेतं स मुदाऽऽश्रवेभ्यः संश्रावयंस्तां क्षणदामनैषीत् ॥ ५३ ॥

अथ द्युनदाम्बुरसि क्षमीन्द्रो निर्वर्त्य नित्यं विधिवत्स शिष्यैः ।
तीरे निदिध्यासनलालसोऽभूदत्रान्तरेऽश्रूयत लोकवार्ता ॥ ५४ ॥

जम्बूद्वीपं शस्यतेऽस्यां पृथिव्यां तत्राप्येतन्मण्डलं भारताख्यम् ।
काश्मीराख्यं मण्डलं तत्र शस्तं यत्राऽऽस्तेऽसौ शारदा वागधीशा ॥

द्वारैर्युक्तं माण्डपैस्तच्चतुर्भिर्देव्या गेहं यत्र सर्वज्ञपीठम् ।
यत्राऽरोहे सर्वविज्ञजनानां नान्ये सर्वे यत्प्रवेष्टुं क्षमन्ते ॥ ५६ ॥

प्राच्याः प्राच्यां पश्चिमाः पश्चिमायां ये चोदीच्यास्तामुदीचीं प्रपन्नाः ।
सर्वज्ञास्तद्द्वारमुद्घाटयन्तो दाक्षा नद्धं नो तदुद्घाटयन्ति ॥ ५७ ॥

वार्तामुपश्रुत्य स दाक्षिणात्यो मानं तदीयं परिमातुमिच्छन् ।
काश्मीरदेशाय जगाम हृष्टः श्रीशङ्करो द्वारमपावरीतुम् ॥ ५८ ॥

द्वारं पिनद्धं किल दाक्षिणात्यं न सन्ति विद्वांस इतीह दाक्षाः ।
तां किंवदन्तीं विफलां विधातुं जगाम देवीनिलयाय हृष्यन् ॥ ५९ ॥

वादिव्रातगजेन्द्रदुर्मदघटादुर्गर्वसङ्घर्षण-
श्रीमच्छङ्करदेशिकेन्द्रमृगराडायाति सर्वार्थवित् ।
दूरं गच्छत वादिदुःशठगजाः संन्यासदंष्ट्रायुतो
वेदान्तोरुवनाश्रयस्तदपरं द्वैतं वनं भक्षति ॥ ६० ॥

